द्वादशे वर्षे ] आश्विन-कार्तिक मार्गशीर्ष पौष पूर्णिमाः १९९३ [ ४-५-६-७ संख्याः




रागद्वेषनिशाचरं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वल्लोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र "सूर्योदयः" ॥

---

Sanctioned by the Directors of Public Instruction United Provinces and Bombay Presidency for use in Schools and Colleges.

सम्पादकः—

**श्रीमान् अन्नदाचरणशर्मा तर्कचूड़ामणिः**

[ महामहाध्यापकः, महामहोपाध्यायः ]

—:*:—

उद्गम-स्थानम्—

**श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी ।**

—:o:—

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) असमर्थेभ्यःछात्रेभ्यः १)

वैदेशिकेभ्यश्च ६) पुस्तकालयेभ्यश्च १)

# विषयसूची।





# सूर्योदयः ।

द्वादशे वर्षे } आश्विन-कार्तिक-मार्गशीर्ष-पौष पूर्णिमाः १९९३ } ४-५-६-७ संख्याः

## सम्पादकीया अभिप्रायाः ।



### संस्कृतपरीक्षाणाम् अनैक्यम् ।

सम्प्रति भारतेऽस्मिन् संस्कृतवाङ्मयाध्ययनाय प्राधान्येन तत्तत्प्रान्तीय-शासकैः प्रतिष्ठापिताः संस्कृत-महाविद्यालया जगन्नाथपुरी-कलिकान्ता-( कलिकाता ) मोदफलपुर—( मोजफ्फरपुर ) काशी-लक्ष्मणपुर-[ लखनऊ ] जयपुर-मद्रासप्रभृतिप्रदेशेषु प्रतितिष्ठन्ति । येषु च महाविद्यालयेषु शतशः संस्कृतच्छात्रा अध्ययनं कुर्वन्ति । सहस्रशश्च तत्पाठ्यपद्धत्या सञ्चाल्यमानेषु विद्यालय-महाविद्यालयान्तरेषु पठित्वा तदीयपरीक्षा ददति । एतदतिरिक्ता बहवश्चैवंप्रदेशाः सन्ति यत्र स्वतन्त्रपाठ्यपद्धत्यैव संस्कृतभाषाध्यापनप्रकारः प्रचलितो विद्यते । यथा हरद्वारर्षिकुल–हिन्दूविश्वविद्यालय–ढाकासंस्कृतसमाजादिस्थानेषु । तदेवं सर्वतोऽपि सम्प्रति संस्कृतशिक्षा समृद्ध्यमानैव दृश्यते । इतोऽपि बहवोऽन्ये संस्कृतशिक्षाप्रचारप्रेमाणः श्रेष्ठिनः साधवो मोहान्ता गृहस्थाश्चेभ्याः स्वाध्यवसायेन स्वद्रव्यव्ययेनैव संस्कृतपाठशालाः प्रतिष्ठाप्य संस्कृत-शिक्षा-प्रचारं कुर्वन्ति । किं बहुना पूर्वकालापेक्षया साम्प्रतम् संस्कृतशिक्षाप्रचार-साधनानि भूयस्यां संख्यायामधिकमात्रयापि च सम्वर्द्धितान्येव दरीदृश्यन्ते । परन्तु सत्स्वपि साधनप्रकारप्राचुर्य्येषु संस्कृत-शिक्षासमुन्नतिस्तादृशी न दृश्यते, यादृशी च पूर्वकाले प्रवृद्धा समजनि । एकस्य राज्ञो भोजस्यैव साम्राज्ये श्रूयते यत् आशूद्र-कुविन्दं सर्वेऽपि संस्कृतज्ञा अभूवन् । तथाहि भ्रमवशात्तस्य राज्ञो नगररक्षाधिकृता रक्षिपुरुषाः कदाचिदेकं कुविन्दं मूर्खं मत्वा तस्य राज्ञः

सभायामानीतवन्तः। सचात्मनः परिचयप्रदानव्याजेन कवितामेकां चकार यया च प्रसन्नो राजा तं पारितोषिकप्रदानादिनाऽनुजग्राह। सा च कवितेयं विद्यते—

"काव्यं करोमि नहि चारुतरं करोमि।
यत्नात् करोमि यदि चारुतरं करोमि॥
भूपालमौलिमणि—मण्डितपादपीठ !
हे साहसाङ्क ! कवयामि वयामि यामि॥"

इत्थं पूर्वकाले शूद्रा अपि काव्यकर्तारो भवन्तिस्म। प्राक्तनकालिक-कविभिः कृतानि काव्यानि सम्प्रत्यपि समाद्रियमाणानि सन्ति। पूर्वकविभिरेव कृतानि नैषधचरित-बुद्धचरितप्रभृतीनि काव्यानि, अभिज्ञानशाकुन्तल-मुद्राराक्षस-वेणीसंहारोत्तररामचरितप्रभृतीनि च नाटकानि भारतीयसंस्कृतसाहित्ये समुज्ज्वलरत्नानि जेगीयन्ते। यैश्च सम्प्रत्यपि भारतीय-संस्कृत-साहित्य-समाज-मस्तकं समुन्नतं विद्यते। किं बहुना प्राक्तन-पाठ्यपद्धतिप्रकारोऽपि परिष्कृतो भवतिस्म।

सम्प्रति तु विलक्षण एव दृश्यते संस्कृताध्ययनाध्यापनप्रकारः। एकस्यैव विषयस्य प्रथमां परीक्षामारभ्याचार्य्यपरीक्षां यावदध्ययनं कुर्वते संस्कृतच्छात्राः, येन न जायतेऽधुना तादृशी प्रौढता यादृशी च पूर्वकालिक-विद्वत्सु भवति स्म। उक्तश्च वाग्भटेन विदुषा—

"एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम्।
तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः॥" इति

लोकेऽपि यदि कश्चिदेकामेव भित्तिमतिदीर्घां समुत्थापयति चेत् प्रथमतस्तु सा स्थातुमेव नार्हति। यदि कथञ्चित् तिष्ठति चेदनुपयुक्ता भवति निवासाय। तथैवाधुना केवलं व्याकरणमात्राध्ययनेनैव यापितजन्मानः साम्प्रतिकाः संस्कृतज्ञा भवन्त्यनुपयुक्ता लोकव्यवहाराय। वेदान्तादिदर्शनज्ञानविरहिताश्च पारलौकिकाभ्युदयसाधनान्यपि स्वयं प्रयोक्तुं परेभ्यो चोपदेष्टुं नार्हन्तीति उभयतो विच्युता निपाननीरमिव वृथाजन्म यापयन्ति। तत्र कस्यायमपराध इति जिज्ञासायां साम्प्रतिक्याः परीक्षापद्धतेरेवेति अनिच्छतोऽपि मुखाद्वलान्निःसरत्येव।

इतोऽपि गरीयान् विद्यतेऽस्याः परीक्षापद्धतेरेको दोषः। येन न प्ररोहन्ति संस्कृतशिक्षावल्लयस्तथाच सर्वेऽपि पूर्वोक्ता विश्वविद्यालयाः परस्परमनैक्यजुषो भिन्नां भिन्नां परीक्षापाठ्यपद्धतिं दधति। परस्परमीर्ष्यालूनां तेषां नैकोऽपरस्य

छात्रेभ्यः परीक्षार्थिभ्यः स्वपरीक्षायां प्रवेष्टुमवसरं ददाति। विहारपरीक्षाया मध्यमामुत्तीर्णो नार्हति काशिकराजकीय-संस्कृतपरीक्षाया शास्त्रि-श्रेण्यां प्रवेष्टुम् तथा लवपुरस्थ-विशारदपरीक्षोत्तीर्णः कलिकान्ता-[ कलिकात्ता ] तीर्थपरीक्षायां प्रवेष्टुन्नार्हति । इत्येवं परस्परं संस्कृतपरीक्षाणामनैक्यान्महती हानिर्जायते संस्कृतशिक्षाविस्तारे । विद्वत्सु च परस्परं रागद्वेषवर्द्धनेऽपि पद्धतिरियं तूलानलकृत्यमावहति । काशिकराजकीयपरीक्षोत्तीर्णा लवपुरीयपरीक्षोत्तीर्णा नुपहसन्ति । लवपुरीयाश्च काशीस्थानुपहसन्ति यत् स ग्रन्थानध्यापयितुं नार्हति स संस्कृते पत्रमेकं लिखितुं नार्हतीत्यादि। तत्रास्याः परीक्षापद्धतेरेवायमपराधो यदेवमर्गलापातो जायते सर्वथा समुन्नतौ संस्कृतशिक्षाया इति विस्तराद्विरमन्तो वयम् सर्वानेव परीक्षासंस्कर्तृनभ्यर्थयामहे यत्ते परस्परं सम्मिलन्तः संस्कृतपाठ्यपद्धतिं परिस्कुर्वन्तः सर्वा अपि संस्कृतपरीक्षाः समानयोग्यताका एकसूत्रनद्धाः कुर्वन्तु। येन कोऽपि कस्मिन्नपि विषये अधीती तद्विषये मध्यमपरीक्षोत्तीर्णोऽपरत्राचार्य्यपरीक्षायां प्रवेष्टुमनुज्ञां लभेत। प्रथमपरीक्षोत्तीर्णश्च मध्यमायां प्रवेष्टुमर्हेत् । बुद्धेरुत्कर्षापकर्षमन्तरा सर्वेऽपि समानज्ञानभाजो भवेयुः। ज्ञातानेकशास्त्रसाराश्चैकस्य विषयस्य विशेषज्ञाः सर्वेऽपि परीक्षार्थिनः स्युरिति । एतादृशं-नियमनिर्माणं कुर्वन्तु, येन भारतस्य यस्य कस्यापि प्रांतीयसंस्कृतपरीक्षायां समुत्तीर्णः छात्रोऽन्यप्रान्तीय-तत्समानां परीक्षां दातुं शक्नुयात्। यथा आंग्लभाषायां मैट्रिक्युलेशन परीक्षोत्तीर्णो विद्यार्थी सर्वत्रैव प्रवेष्टुमर्हति। परन्तु संस्कृतज्ञानां कृते न भवति तथा। इति परीक्षाध्यक्षमहोदयाः संस्कृतपरीक्षानैक्यदोषदूरीकरणार्थं नूनं प्रयत्नं कुर्वन्त्विति निवेदनम् ।

न विद्यतेऽत्र किमपि विघ्नबाहुल्यम्। यदि विश्वविद्यालयाधिकारिणः परस्परं मिलित्वा पत्रव्यवहारादिना वा विचारविनिमयं विधाय स्व-स्व-परीक्षापद्धतेः संशोधनपरिवर्द्धनादिकं विधाय कियदेव परिवर्तनं कुर्य्युश्चेत् सर्वोऽप्ययं रोगश्चिकित्सितः स्यात् । नापेक्ष्यतेऽत्रायासबाहुल्यं केवलं संस्कृतशिक्षाभ्युन्नतिविषयिणी श्रीमतां समीहैव कार्यसाधिका भविष्यति । दयन्तां संस्कृताध्ययन तत्पराणामकिञ्चनानां संस्कृतच्छात्राणाम् इति ।



# अस्माकं धार्मिक-संस्कृतपरीक्षा ।

सम्प्रति देशेऽस्मिन् कीयती विद्यते उपेक्षा धार्मिकाध्यात्मिक-ज्ञानस्येति नास्ति तिरोहितं तज्ज्ञानां ज्ञानवताम् । सर्वथा हि पाश्चात्य-वात्यया कलुषीकृतनयना अनयना एव नयन्ति नेतारो जनताः स्वाभिलषिते तिरोहितभारतीय-संस्कृतावध्वन्यधुना ।

अस्तु, ते हि यथास्वज्ञानं नयन्ति सर्वान् स्वानुगान् स्वचिन्तिते विमलेऽध्वनि इति न ते वाच्यास्पदीभूताः । वाच्यास्तु सम्प्रति धार्मिका नेतारो विद्यन्ते ये हि तत्पथिकाः सन्तोऽपि न तदध्वपरिचिता जायन्ते । साम्प्रतिकाः संस्कृतज्ञाश्छात्रा विद्वांसो वा ज्ञातव्याकरणन्यायग्रन्था अघ्रातधर्मशास्त्रगन्धा एवमेव स्वयं सर्वथा अनुपयुक्ताः स्वानुगानपि विपथे नयन्तः सर्वथा अन्धकारे तान् त्यजन्ति । अत एव तान् अनाथान् पश्यन्तो ये केऽपि यथाभिलषन्ति तथा नयन्ति । उक्तञ्च केनापि कविना —

"याति जन्तोः प्रमादेन गजो व्यालत्ववाच्यताम्"

अस्तु, एतदेवालोक्य अखिलभारतवर्षीयधार्मिकाध्यात्मिकसंस्कृतविश्वविद्यालयाध्यक्षैरियं नूतना संस्कृतपरीक्षा-पाठ्यपद्धतिः प्रचालिता विद्यते । यत्र च सर्वेष्वेषु प्रचलित-विषयेषु धार्मिकाध्यात्मिकग्रन्थानां सन्निवेशो विद्यते । आयुर्वेदविषयेऽपि कियतो धार्मिकाध्यात्मिकविषयकग्रन्थस्यास्ति प्रवेशः । येन सर्वेऽपि एतद्विश्वविद्यालय-परीक्षोत्तीर्णाः छात्राः सर्वथा धर्मज्ञानशून्यास्तथाध्यात्मज्ञानविहीना नैव भविष्यन्ति, यथान्य-विश्वविद्यालयीयपरीक्षोत्तीर्णा भवन्तीति । परन्तु--

नैष स्थाणोरपराधो यदेनमन्धो न पश्यतीति ।

वर्षत्रयात् प्रचालितायामप्यस्यां परीक्षायां कालप्रभावात् परीक्षार्थिनो न सन्तोषप्रदां संख्यां पूरयन्तीति कोऽयं व्यामोहः ? सूर्योदयोऽयं सर्वत्रैव (यू० पी०) संयुक्तप्रांतीय-मध्यप्रान्तीय-विहारप्रान्तीयविद्यालयेषु राजस्थान-स्वतन्त्रराजन्यवर्गराज्येषु महाराष्ट्रमोहमयीप्रभृतिप्रदेशेषु च गच्छत्येव । तत्रत्याः सर्वेऽपि संस्कृतज्ञाः परीक्षयाऽनया परिचिता एव सन्ति । तर्हि कथन्न भूयस्यां संख्यायामस्या मुपस्थिता भवन्तीति ?

वयं हितबुद्ध्या तानुपदिशामो यत् साम्प्रतिके युगे यदि भवन्तो भारतीय-संस्कृतिसंरक्षणपरा न भविष्यन्ति चेत् कियतैव कालेन रूसराष्ट्रप्रेमाणः साम्य-

वादिन इहापि नामान्तरेण प्रविश्य भवतां प्राक्तनीं संस्कृतिं विनाश्य नवीनामेवानीश्वरवादिनीं सभ्यतां प्रचार्य्य देशमिममृषिजुष्टमपि नास्तिकबहुलं विदधतो विगुणं विध्वंसयिष्यन्ति । तदपराधमलीमसाच्छन्नमतयश्च भवन्त एवाग्रेजन्मान उपहसनीया भविष्यन्ति, इति सत्यवसरे—

"ललितं निर्गते नीरे सेतुरेषा चिकीर्षति"

इत्येतस्यालङ्कारस्यालङ्कर्तारो न भवन्तु इति भूयो भूयो विनिवेद्यामहे। भवन्तो धार्मिकाध्यात्मिकग्रन्थानां परिशीलनं विदधतः स्वज्ञानं परिमार्जयन्तु न केवलं शब्दज्ञानप्रमाणज्ञानमात्रपरा भवेयुः, वाक्यज्ञानप्रमेयज्ञानार्जनेऽपि दत्तावधानाः स्युः । विना वाक्यप्रमेय-ज्ञानं पदप्रमाणज्ञानं व्यर्थमेव भवतीति न विस्मरणीयम् !



## कोठारानगरे धार्मिकसमारोहः।

कच्छदेशीय कोठारा नगरनिवासिनः श्रीजयरामव्यास उकरडामहोदयस्य पुत्र्या गङ्गास्वरूपया श्रीदेवकाबाई देव्या महारुद्रयागस्यानुष्ठानमस्मिन् वर्षे वैशाखशुक्लद्वितीयात आरभ्य नवमीं यावदूव्यधापयत्। तत्र काशीस्थाः सर्वतन्त्रस्वतन्त्राः पण्डितपद्मनाभशास्त्रिणस्तथा महामहाध्यापकाः पं० श्रीगोपालशास्त्रिणो दर्शनकेशरिण एवं नासीकस्थाः पं० श्रीबापुशास्त्री गर्गे पं० मोरेश्वरगर्गे कच्छस्थदेशलपुरीया महोपाध्यायाः पं० दयाराम खटाउवर्य्याः तेरापुरस्था राजपण्डिताः पुरुषोत्तमलालजीशर्माणश्च निमन्त्रितास्तत्रोपस्थिताश्चासन् । अन्येऽपि योग्या वैदिकाः कर्मकाण्डिनश्च विद्वांसस्तत्र यज्ञे होतृत्वेन संवृत्ता बभूवुः ।

तत्र यज्ञे जलयात्रादिवसादारभ्य प्रतिदिनं सायं धर्मसभा भवतिस्म । यत्र सर्वे विद्वांसो मिलित्वा धर्मस्य प्रत्यङ्गं व्याख्यानं कुर्वन्तिस्म । एतेन तत्र कच्छदेशे सम्यक् धर्मप्रचारो जातः । तत्रार्य्यमहिलासु साधु धर्मश्रद्धाविस्तारो विद्यते । एतद्यागाङ्गमाङ्गलिकजलयात्रादिने सम्मान्या नगरनार्य्यः सौभाग्यवेशवेष्टिता जलकलसान् शिरःस्थान् कृत्वा महिम्नस्तोत्रपाठं कुर्वत्यो 'यन्मार्गं गच्छन्तिस्म तद्धि सत्ययुगीयस्मृतिं समेधयतिस्म ॥

एवं महता समारम्भेण समनुष्ठीयमानस्य महारुद्रयागस्य पूर्णाहुति-दिवसात् प्राक् श्रीकाशी-पण्डित-सभायाः शाखास्थानीया श्रीकच्छविद्वत्परिषत् प्रतिष्ठापिता ऽभूत् । यत्र महोपाध्यायः पं० श्रीदयारामखटाउ महोदयः स्थायी सभापतिः, श्रीजयराम व्यास उकरडा महोदयश्च प्रधानमन्त्री निर्वाचितः । तत्रैवा स्मिन् त्वर्षे मान्यविद्वद्भ्यः प्रदत्तानां सम्मानपत्राणां नामावली श्रीकाशीपण्डित-सभायाः प्रधानमन्त्रिणा श्री पं० गोपालशास्त्रिणा श्राविता । तद्यथा श्रीपूर्णानन्द स्वामी—( भिषक् चूड़ामणिः ) श्रीपुरुषोत्तमजी लालजी,—( ज्योतिषकर्मकाण्ड-विशारदः ) । श्रीवापुशास्त्रीगर्गे-(श्रौतस्मार्तालङ्कारः) । श्रीमोरेश्वरगर्गे (ज्योतिष-विभूषणम् ) । श्रीविट्ठलजी जेठाभाई—(कर्मकाण्डभूषणम् ) ।

जोशीमाधवजी (कर्मवीरः) जोशीयादवजी (धर्मवीरः) । देवीनानवाई—(विज्ञानसरस्वती) । देवीदेवकावाई (विज्ञानवागीश्वरी) । अवसाने च महामहा-ध्यापकेन पं० श्रीगोपालशास्त्रिणा दर्शनकेशरिणा विरचितं संस्कृतपद्यमयं यज्ञ-प्रशस्तिपत्रं श्रीपुरुषोत्तमशास्त्रिणा कच्छभाषयानूद्य संसदि श्रावितम् । तदवसाने ससनातनधर्मजयघोषं सभा विसर्जिता । प्रशस्तिस्वरूपञ्चेदमधस्तनम्—

पं० श्रीजयरामव्यास उकारडा महोदयानाम् पुत्र्या गंगास्वरूपया श्री देवका बाई देव्या समनुष्ठितस्य श्रीमहारुद्रयागस्य ।

## प्रशस्ति-पत्रम् ।

या साम्प्रतं कलियुगेऽप्यवलासमाजे ।
धर्मामृतं प्रवचनात् प्रतिवर्षति स्वात् ॥
कोठारपुर्य्यजनि विप्रकुलेऽत्र कच्छे ।
माता रमास्ति च पिता जयराम आस्ते ॥ १ ॥
सा देवका व्यततरुद्रमखं महान्तम् ॥
देवी वुधे विधितिथौ सितमाधवेऽस्मिन् ॥
पितृव्य-माधव-वुधस्य सपत्निकस्य ॥
साहाय्यमेत्य जननी-जनक प्रसादात् ॥ २ ॥
अस्मिन्महारुद्रमखे स्वतन्त्रः
षड्दर्शनाचार्य्यवरः प्रसिद्धः ।
काशीनिवासी वुधवन्द्यवाग्मी ।
श्रीपद्मनाभः सकलोपदेष्टा ॥ ३ ॥
श्रीमद्दयाराम-खटाउ-वर्य्योऽ—
प्याचार्य्य आस्ते विवुधाग्रगण्यः ।

ब्रह्मा वृतोऽसौ पुरुषोत्तमाख्य—
स्तेरा निवासी बुधराजमान्यः ॥ ४ ॥
उपाचार्य आस्ते बुधो वापुगर्गे
तथा गाणपत्योऽस्ति गोपालशास्त्री
मयूरेश्वरो विठ्ठलो वैदिकौ यौ
सदस्यौ वृतावृत्विजश्चान्यविप्राः ॥ ५ ॥
बुधो वल्लभो विश्रमो द्वारपालाः ।
स्तथा लालजी विज्ञदामोदरोऽपि ॥
पुरीस्था नराः पौर-नार्य्यस्तथा वै ।
वृताः स्वागते याग आगन्तुकानाम् ॥ ६ ॥
प्रारम्भतो यागविधेः सभायां सायं सदा सज्जनसम्भृतायां
काशीस्थकच्छस्थबुधाः समेता वर्षन्ति धर्मामृतमत्र वाग्भिः ॥ ७ ॥
इत्थं देवी देवकावाइ पुण्या स्वर्गद्वारं सम्प्रतिष्ठाप्य यागम्
पौरान् योग्यान् बन्धुवर्गांस्स्वकीयान् मिष्टान्नाद्यैस्तर्पयन्ती स्वपुर्य्याम् ८
काशीस्थानां कच्छदेशस्थितानां नासीकस्थानां द्विजानां समन्तात्
वेदज्ञानां मेलयित्वा समाजं गोष्ठीं धर्म्यां कारयत्येव नित्यम् ॥ ९ ॥
अहरहरियमास्तां धर्मकर्मप्रसक्ता
द्रविणसुतसमेता मातृतातादयोऽस्याः ।
नगरमनुजनार्य्यो धर्मभाजो भवेयु-
रिति मखसुधियां नः स्वाशिषां राशयः स्युः ॥ १० ॥
शाकेऽङ्क शरवस्वब्जे वह्न्यङ्काङ्काब्जवैक्रमे ।
माधवे धवले भौमे नवम्यां मखपूर्णता ॥ ११ ॥



## महाकवयित्री श्रीमती क्षमादेवीरावमहोदया-
### साधारण-परिचयः ।

लेखकः—श्रीमान् पं० बद्रीदत्त शास्त्री साहित्याचार्यः

मुम्बई नगरी, दिव्या भव्य भूतिसमन्विता ।
भारतस्य शिरोभूता राजते सागराञ्चला ॥
महाविद्यालयस्तत्र सेन्ट-जेहिरनामकः ।
विद्वाँस्संस्कृताध्यक्षा पस्टिलरमहोदयाः ॥

संस्कृतं पाठयन्त्यत्र सर्वशास्त्रविशारदाः ।
संस्कृते परमः स्नेहः तेषामस्ति स्वभावजः ॥
कदाचिन्मे प्रदत्तं तैः सुन्दरं पुस्तकद्वयम् ।
एकस्मिँस्तत्रकासाँश्चित् कथानामुत्तमा कृतिः ॥
सत्याग्रहस्य चाख्यानम् आसीद्ग्रन्थेऽपरे शुभम् ।
पठित्वा पुस्तके भव्ये सरले सुरसाप्लुते ॥
द्रष्टुमैच्छं महाभागाम् परमोत्कण्ठयावृतः ।
लेखिकां ग्रन्थरत्नानाम् क्षमारावेति विश्रुताम् ॥
साकमेस्टिन्नराचार्यैः यत्तत्राहं न्यभालयम् ।
तन्नाहं विस्मरिष्यामि सौजन्यं सहजं परम् ॥
द्राकरा रावनामाख्याः सन्ति राजसुपूजिताः ।
परमैश्वर्यसम्पन्नाः तथापि विनयान्विताः ॥
तेषामर्धाङ्गिनी देवी क्षमाराव इति श्रुता ।
परमाह्लादसंयुक्ता स्वागतं नः समाचरत् ॥
संस्कृते पाटवं तस्याः वैचक्षण्यं च भाषणे ।
उच्चारणे च वैशद्यम् दृष्ट्वाहं विस्मयं गतः ॥
यथेच्छं गद्यपद्याभ्याम् वक्तुं सालं मनीषिणी ।
केवलं संस्कृतस्यैव भवेत्सा पारगामिनी ॥
सन्देहोऽसौ निवृत्तो मे श्रुत्वा तस्या वचोऽन्तरम् ।
साहित्यं सर्वदेशानाम् तया सम्यग्विवेचितम् ॥
इटली--फ्रांसशर्म्मण्यदेशादीनां च भाषया ।
अनवच्छिन्नरूपेण श्रमस्तस्या न भाषणे ॥
षड्विंशति यतो वारम् सा प्रवासान्तरं गता ।
निखिलं मण्डलं भूमेः तया दृष्टमनेकशः ॥
नाटकाख्यानकाव्यानि नानानीवृतभाषया ।
बहुशो लिखितान्यत्र साहित्यावर्धनेच्छया ॥
संस्कृतस्य प्रचारं तु संस्कृते रक्षणं तथा ।
कर्तुं सा यतते नित्यम् भुवि प्राणपणैरपि ॥
यतोऽस्याः पितरोप्यासन् विदुषामग्रगामिनः ।
पाण्डुरंगा इति ख्याताः सर्वशास्त्रविचक्षणाः ।
येषां सहस्रशः शिष्याः महाराष्ट्रविभूतयः ॥
अस्याः समस्त ग्रन्थानाम् पूर्वापरविवेचनम् ।
समालोचनकार्यं च करिष्यामः शनैः शनैः ॥
धनिनां भारतीप्रेम क्व[illegible] विलोक्यते ॥
प्रार्थयामो वयं तस्माद् भवन्तं जगदीश्वरम् ।
यदेतादृशव्यक्तीनां चिरं भवतु जीवनम् ॥



# वेदपुराणयोरेकवाक्यता ।

## ( अवैदिकतानिरासः )

### क्रमागता ।

निबन्धाः—पं० श्री दीनानाथशर्मा शास्त्री—सारस्वतः
( मुलतानस्थ सं० कालेजाध्यापकः )

* देवा मनुष्यभ्यो भिन्नाः *

'अग्निर्देवेषु राजत्यग्निर्मर्त्येष्वाविशन्' ऋ० ५।२५।४ अत्र देवमर्त्ययोः पृथक् पृथग् ग्रहणम् । 'तन्वेवाऽनवक्लृप्तं यो मनुष्येष्वनश्नत्सु पूर्वोऽश्नीयाद्, अथ किमु यो देवेष्वनश्नत्सु पूर्वोऽश्नीयात्' शत० २।१।४।२ इत्यर्थापत्त्याऽपि देवमनुष्यभेदो विशदः । 'देवाश्च मनुष्याश्च' शत० २।३।४।४ अत्र चकार उभयोर्भेदकः । 'तिर इव वै देवा मनुष्येभ्यः' शत० ३।१।१।८ । 'यो देवो मर्त्यां अति' अथर्व० २०।१२७।७ अत्र देवरूपनृपस्य मर्त्येभ्योऽतिशयितशक्तिमत्त्वं प्रोक्तम् । 'प्राची हि देवानां दिक्, उदीची हि मनुष्याणां दिक्' शत० १।७।१।१२, १।८।३।१८ । 'नकिर्देवा वारयन्ते न मर्त्ताः' ऋ० ४।१७।१६ । 'देवानामुत मर्त्यानाम्' ऋ० ४।१२।५ । 'ऋणं ह वै जायते योऽस्ति, सजायमान एव देवेभ्य ऋषिभ्यः पितृभ्यो मनुष्येभ्यः' शत० १।७।२।१ । 'स येन देवेन ऋणं जायते, तदेनाँस्तदवदयते, यद्यजतेऽथ यदग्नौ जुहोति' शत० १।७।२।६ इत्यादिना सन्दर्भेण अग्नौ हवनेन देवऋण + पूर्त्तिर्निर्दिष्टा; यदि देवा ऐहलौकिका विद्वन्मनुष्या मन्येरन्, तर्ह्यग्नौ हवनेन किं तेषामृणनिर्य्यातनं भविष्यति ? यद्येवं—तर्ह्यार्य्यसामाजिकविद्वद्भिस्सनातनधर्म्मविद्वद्भ्य ऋणं दातव्यम्, ते तत्पूर्त्यर्थं हवनं करिष्यन्ति । वस्तुतस्तु—'न ऋते त्वदमृता मादयन्ते' ऋ० ७।११।१ इत्यग्नेर्देवमुखत्वम् । 'आऽग्ने ! वह हविरद्याय देवान् इन्द्रज्येष्ठास इह मादयन्ताम् । इमं यज्ञं दिवि देवेषु धेहि, ऋ० ७।११।५ इत्यग्नितृप्तिद्वारा देवानां तृप्तिः ; अत एव 'अग्नौ हि सर्व्वाभ्यो देवताभ्यो जुह्वति' शत० ३।१।३।१ 'अग्निर्वै सर्व्वा देवताः' शत० ३।४।१।१९, निरुक्त० १४।३२ ।

'विद्वाँसो हि देवाः' शत० ३।७।३।१० इति श्रुतिमुपस्थाप्य केचन विद्वन्मनुष्याणामेव नाम देवा इति कथयन्ति; तदसत्—शतपथस्य बहुभिः

+ देवऋणस्य । 'ऋत्यकः' इति पर्जन्यवल्लक्षणप्रवृत्त्या ह्रस्वस्याऽपि ह्रस्वः, समासेऽप्ययं प्रकृतिभावः ।

प्रमाणैर्भूमिकायामस्मिन्निबन्धे च देवमनुष्ययोर्मिथो भेदोऽस्माभिः साधितः, अत्राऽपि शतपथब्राह्मणं मनुष्याणां देवत्वन्नाचष्टे, प्रत्युत वादिनोऽत्र पूर्व्वोत्तरं पाठं परित्यज्य च्छलं कुर्व्वन्ति ; तत्राऽयं पाठः 'उशिजो वह्नितमानिति, विद्वा ँ सो हि देवास्तस्मादाहाशिजो वह्नितमानिति, शत० ३।७।३।१० अत्र 'हि, शब्दः स्पष्टं हेत्वर्थकः, नत्वत्र देवविदुषो ँ पर्य्यायतासूचकः, यतोऽग्रे— 'तस्मादाह' इति लिखितम् । अयं भावः—'देवान् दैवीर्विशः प्रागुरुशिजो वह्नितमान्' यजुः ६।७ अयं याजुषमन्त्रः, तत्र विशेष्याणां देवानां विशेषणम्-उशिजो वह्नितमानिति, तद्विशेषणविवरणे शतपथे इदमुक्तम्, यद्—'उशिजो वन्हितमान्' इति विशेष्याणां देवानां विशेषणं सार्थक्यं भजते, हि–यस्मात्कारणाद् देवा विद्वांसो भवन्ति, तस्मात् कारणादुक्तमन्त्रे देवानां विशेषणम् 'उशिजो वह्नितमान्' इति कथ्यते । अत्र देवा इति विशेष्यं न तु विद्वांस इति, विद्वांस इति तु विशेष्याणां देवानां विधेयविशेषणम्, तेनाऽत्र देवास्तु विद्वांसः सिद्ध्यन्ति ; परं विद्वन्मनुष्या देवा न सिद्ध्यन्ति, विदुषामत्र विशेष्यताऽभावाद्, यस्य मन्त्रप्रतीकस्येदं विवरणं तत्र 'विद्वान्' इति शब्दो दृश्यत एव न, यत् स शब्दो विशेष्यभूतः स्यात्, किन्तु तत्र देवशब्द एव दृश्यते; स एव तत्राऽत्र च विशेष्यभूतः । इति सूक्ष्मतया विवेचनीयम् । किञ्च वादिनो विदुष एव ब्राह्मणान् मन्यन्तेऽप्यूनेव च देवान्, एवं सति देवब्राह्मणयोर्भेदो न स्यात्; परं तदसत्—'सम्पूजयेद् देवान् ब्राह्मणांश्च' मनु० ६।२०१ 'तद् देवांश्च ब्राह्मणांश्च, देवैश्च ब्राह्मणैश्च' शत० ३।३।४।२० अत्र भेदः । ये शतपथोक्त-प्रमाणद्वारा शतपथमते विदुषो मनुष्यानेव देवशब्दवाच्यान् मन्यते; ते 'शतपथस्य एकमतीव स्पष्टं प्रमाणं देवमनुष्यभेदे श्रृण्वन्तु—

'प्रजापतिं वै भूतान्युपासीदन् ।......ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जान्वाच्योपासीदन्, तानब्रवीद्यज्ञो वोऽन्नम्, अमृतत्वं वः, ऊर्ग् ँ वः, सूर्य्यो वा ज्योतिरिति, शत० २।४।२।१ 'अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्य उपासीदन्, तानब्रवीद्—मासि मासि वोऽशनँ, स्वधा वो मनोजवो वः, चन्द्रमा वो ज्योतिरिति ।२।४।२।२। अथैनं मनुष्याः प्रावृता उपस्थं कृत्वोपासीदन्, तानब्रवीत्—सायं प्रातर्वोऽशनम्, प्रजा वः, मृत्युर्वः, अग्निर्वो ज्योतिरिति । ३ । अथैनं पशव उपासीदन्, तेभ्यः स्वैषमेव चकार, यदैव यूयं कदा च लभाध्वै, यदि काले यद्यनाकालेऽथैवाऽश्नाथेति, तस्मादेते यदैव कदा च लभन्ते, यदिकाले यद्यनाकालेऽथैवाऽश्नन्ति ।४। अथैनं ँ शश्वदप्यसुरा उपसेदुरित्याद्युः,

तेभ्यस्तमश्च मायाश्च प्रददौ, अस्त्यहैवाऽऽसुरमायेति पराभूता ह त्वेव ताः प्रजाः, ता इमाः प्रजास्तथैवोपजीवन्ति, यथैवाऽऽभ्यः प्रजापतिर्व्यदधात् ।५। नैव देवा अतिक्रामन्ति, न पितरो न पशवो, मनुष्या एवैकेऽतिक्रामन्ति, श० २।४।२।६ अत्र देवानां, पितॄणां, मनुष्याणाम्, पशूनाम्, असुराणाञ्च मिथः कियान् भेदः प्रदर्शितः । अत्र देवमनुष्याणां मृत्युममृतत्वादिभेदो भोजन-कालभेदादिकः स्पष्ट एव प्रदर्शितो भेदः । तेन सिद्धम्, यच्छतपथब्राह्मणं देवान्+मनुष्येभ्यो भिन्नान् मनुते । 'तयोर्दैवमचिन्त्यन्तु मानुषे विद्यते क्रिया' मनु० ७।२०५ इति पार्थक्येन ग्रहणम् ।

'इन्द्रौजिष्ठौजिष्ठस्त्वं देवेष्वस्योजिष्ठोऽहं मनुष्येषु भूयासम्, यजु०: ८।३९ अत्र देवमनुष्ययोः पृथग् ग्रहणादुभयोः कीदृक् स्पष्टो भेदः प्रदर्शितः । एवं— 'त्रेधा भागो निहितो यः पुरा वो यो देवानां पितॄणां मर्त्यानाम् । अंशान् जानीध्वं विभजामि तान् वो यो देवानां स इमां पारयाति, अ० ११।१।५ अत्र मन्त्रो देव-पितृ-मनुष्याणां 'त्रेधा' इति पदेन कीदृक् स्पष्टो भेदोऽभिहितः, एतेन पितरोऽत्र मृत्वा पितृलोकमुपेयिवांस एव गृह्यन्ते, नत्विह जीविता इत्यपि सिद्धम्, मनुष्येभ्यस्तेषां पृथग्ग्रहणात् । ये च देवा असुर ! ये च मर्त्ताः' ऋ० २।२७।१० अत्र चकारेणोभयोर्भेदो विशदः । 'देवस्य मर्त्यस्य च' ऋ० २।७।२ 'अन्तर्देवान् मर्त्यांश्च' ऋ० ८।२।४। 'तेनेमं यज्ञं नो वह (अग्ने !) स्वर्देवेषु गन्तवे' ऋ० ४।५।१७। 'इन्द्र ! देवो न मर्त्यः' ऋ० ८।१४।४ 'अमृतानामुत वा मर्त्यानाम्' ऋ० १०।३३।८ अत्र 'उत वा' शब्द उभयोर्वैशद्येन भेदग्राहकः । एष वै देवानु विद्वान् यदग्निः' शत० १।५।२।६ अत्र विभक्तिभेदाद् देवविदुषोर्भेदः । * 'अव देवैर्देवकृतमेनोऽयक्षयव मर्त्यैर्मर्त्यकृतम्' यजुः० २०।१८। 'अमर्त्या ! मर्त्यां अभि नः सचध्वमायुर्धत्त प्रतरं जीवसे नः, अ० ६।४१।३ इत्यमर्त्य-( देव )-मर्त्य-( मनुष्य ) भेदः स्फुटः; अन्यथा को मनुष्यो मनुष्यायाऽऽयुर्दद्यात् तत् केवलं देवेषु सम्भवति । 'देवानामुत मर्त्यानाम्' यजुः १९।४७। 'इन्द्रस्तुजो बर्हणा आविवेश नृवद् दधानो नर्य्या पुरूणि' अ० २०।११।५ अत्र इन्द्रस्य कृते 'नृवत्' मनुष्य इवेति दृष्टान्त उपमा वा' तेन प्रतीयते इन्द्रो नर-योनितो भिन्नः, स चेन्द्रो

+ 'स यदग्नौ जुहोति, तद् देवेषु जुहोति, तस्माद्देवाः सन्ति; अथ यत् सदसि भक्षयन्ति—तन्मनुष्येभ्यो जुहोति—तस्मान्मनुष्याः सन्ति; अथ यद्बहिर्धिष्ण्ययोर्नाराशंसाः सीदन्ति—तत्पितृषु जुहोति तस्मात् पितरः सन्ति' शतपथ ३।९।२।२५ इति देवपितृमनुष्याणां भेदः । * शत० २।५।२।४७।

देव इति पूर्व्वोपस्थापितयजुः ८।३६ श्रुत्या सिद्धमेव, तेन देवमनुष्ययोः स्पष्टमेव भेदः सिद्धयति। 'तिर इव वै देवा मनुष्येभ्यः' शत० ३।३।४।६ हन्त! कियती स्पष्टता।

'देवा मनुष्या ३ असुराः पितरः' अ० १०।१०।२६ इति देवाऽसुर-पितृ-मनुष्याणां पृथक्-पृथग्-योनिमत्त्वम्। 'देवत्वं सात्त्विका यान्ति, मनुष्यत्वञ्च राजसाः तिर्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः' मनु० १२।४० जन्मान्तरे इति भावः, इति देवमनुष्यतिर्य्यग्योनीनां मिथः पार्थक्यम्। 'नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः' मनु० १२।४८ 'यज्वान ऋषयो देवाः द्वितीया सात्त्विकी गतिः' म० १२।४६ इति देव-दैत्ययोर्भेदः। 'पितरश्चैव साध्याश्च' म० १२।४६ इति पितॄणां भेदः, स च पूर्व्वमन्त्राऽनुकूलः। न वै देवा अश्नन्ति न पिवन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' छान्दोग्ये ३।६।१,३।७।१,३।८।१,३।६।१,३।१०।१ किं मनुष्या नाऽश्नन्ति, न वा पिवन्ति?। 'मनुष्याणां परोक्षं तद् देवानां प्रत्यक्षम्' ताण्डय० २२।१०।३। 'देवा वै नाकसदः' शत० ८।६।१।१ न तथा मनुष्याः। 'सत्यसंहिता वै देवा अनृतसंहिता मनुष्याः' ऐत० १।१।६। 'भूयांसो हि मनुष्या देवेभ्यः' शत० २।३।२।१८।

'तस्माद् ब्राह्मण उभे वाचौ वदति दैवीञ्च मानुषीञ्च' काठक० सं० १४।५ 'येन देवासो अमृतत्वमानशुः' ऋ० १०। ५३।१० मनुष्यास्तु म्रियन्त एव। 'इन्द्राऽग्नीद्यावापृथिवी मातरिश्वा मित्रावरुणा भगो अश्विनोभा। बृहस्पतिर्मरुतो ब्रह्म सोम इमां नारीं प्रजया वर्द्धयन्तु' अथर्व० १४।१।५४ इमे भिन्नभिन्नदेवा एव, न मनुष्यविशेषाः, अन्यथा तेभ्यो मनुष्येभ्यः प्रजोत्पत्तिं कः स्वीकुर्व्वीतैकस्यां नार्य्याम्। न चेमानि परमात्मनामानि, तत्र द्वि-बहु-वचनवैयधिकरण्यात् देवान्तरसाहचर्य्याच्च मरुतो देवविशेषाः सन्ति न मनुष्याः। 'अगस्त्य इन्द्राय हविर्निरुप्य मरुद्भ्यः सम्प्रदित्साञ्चकार' निरु० १।५।१३ इति निरुक्ते हविष्प्रदानसङ्केताच्च मरुतां देवविशेषत्वं नतु मनुष्यत्वम्। उक्तमन्त्रस्थस्य 'मरुत' इति पदस्य संस्कारविधौ १४६ पृष्ठे 'सभ्यमनुष्य' इत्यर्थं कृत्वा स्वा० दयानन्देन वरस्य स्त्रियां सभ्यमनुष्यैः प्रजोत्पादिता; परमयमर्थोऽशुद्धः, लोकविद्विष्टता चाऽत्र। 'मरुतो देवविशः' शतपथे २।५।१।१२ विश इत्यस्य गणाः प्रजा इति वार्थः 'मानुषीणां विशां दैवीनामुत' ऋ० २०।११।२ इत्यत्र यथा। एतद्विषयेऽधिकं दिदृक्षुभिः काश्मीरिक (श्रीनगर) 'श्री' पत्रे ४।१ 'देवमनुष्याणां भिन्नतायां वेदमतोपन्यासः' इति मत्प्रणीत-प्रबन्धोऽवलोकनीयः।

'गृहं कृत्वा मर्त्यं देवाः पुरुषमाविशन्' अ० ११।८।१८ इति देवमर्त्ययोर्भेदः । 'उभये देवमनुष्या इति महाभाष्ये+'देवस्य सवितुः सर्वे कर्म्म कृण्वन्तु मानुषाः' अ० ६।२३।३ इति मनुष्याणां देवानिमित्तकर्म्मकरणनिर्देशाद् देवमनुष्याणां भेदः सुस्पष्टः । 'एष ह वा अनद्धापुरुषो यो न देवानवति, न पितॄन्, न मनुष्यान्' शत० ६।३।१।२४, ऐत० ७।२।८ अत्र पृथग् ग्रहणाद् देवपितृमनुष्याणां भेदः सुस्पष्टः, एतेन देवपितृपूजाऽपि वैदिकीति ध्वन्यते, अतादृशस्य अनद्धापुरुषत्वं प्रतिपादितम् । 'यो देवः सा देवता, द्युस्थानो भवति' निरुक्त० ७।१५।१ 'न या अदेवो वरते न देवः' अ० २०।३६।११ इत्यदेवदेवयोः पार्थक्यम् । यथा चक्रुर्देवाऽसुरा यथा मनुष्या उत' अ० ६।१४१।३ । यस्मिन् देवा असृजत, यस्मिन् मनुष्या उत' अ० १२।२।१७ । एतदतिरिक्तप्रमाणानि विद्वांसः एतल्लेखप्रथमभागे कृपोहृत्य पश्यन्तु ।

# ४ देवपूजा ।

'प्रगायताऽभ्यर्चाम देवान्' ऋ० ६।६७।४ । तान् वन्दस्व मरुतस्तां उपस्तुहि' ऋ० ८।२०.१४ मरुतो देवविशेषाः सन्ति, ननु मनुष्याः, एतदवसातुं श्रीनगरात् प्रकाश्यमानायां 'श्री' पत्रिकायां ४।१ मल्लेखो द्रष्टव्यो मरुत्सूक्तविवेचना-विषयकः । 'वन्दस्व मारुतं गणम्' ऋ० १।३८।१५ इति देवनमस्कारः । 'अर्चत प्रार्चत' ऋ० ८।६९ (५८) । ८ । 'अर्चा शक्राय' ऋ० १।५४।२ इतीन्द्रपूजनादेशः । 'सर्वान् स देवांस्तपसा पिपर्त्ति' अ० ११।५।२ इत्यनेन तपस्यया देवतानां प्रसन्नता ध्वन्यते । 'तस्माद् देवान् यज' शत० १।८।२।१४ । 'यत्रा नरो देवयन्तः' अ० २०।१०७।१५ नरः—मनुष्या देवयन्तः–देवान् पूजयन्तः । 'नमो देवेभ्यः करोति' शत० १।६।१।२३ । 'स यदग्नौ जुहोति, तद् देवेषु जुहोति ...... यद्धुत्वा प्राश्नाति तन्मनुष्येषु जुहोति' शत० २।३।१।१६ इति देवमनुष्यभेदः । 'मरुतो यज' शत० २।५।२।३८ । 'देवान् यज' श० २।५।२।४१ । 'न...चकृम... देवहेलनम्' ऋ० १०।१००।७ । 'यद् देवहेड-(ल) नं देवासश्चकृमा वयम्' अ० ६।११४।२ इति मन्त्रे देवानामवहेलनया पापं प्रदर्शितम् । 'अर्चता गणाय यो दैव्यस्य धाम्नः ऋ० ७।५८।१ । 'यत्किञ्चेदं वरुण ! दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि । अचित्ती यत्तव धर्मा युयोपिम, मा नस्तस्मादेनसो देव ! रीरिषः' ऋ० ७।८६।५ अनेन देवद्रोहिणां वरुणकर्तृकहिंसा ध्वन्यते, द्रोहश्च तत्पूजाम-

+ 'उभये देवमनुष्याः' शत० ३।६।२।२६ ।

कृत्वा तदपलापो नाम । 'एषहवा अनद्धापुरुषो यो न देवानर्च्चति न पितॄन्' शत० ६।३।१।२४, ऐ० ७।२।८ । 'यद्वो देवा ! श्चकृम जिह्वया गुरुमनसो वा प्रयुती देवहेलनम्' ऋ० १०।३७।१२ इत्यादिना देवाऽवहेलने पापं निर्द्दिष्टम् । 'यत्किञ्चेदं वरुण ! दैव्ये जनेऽभिद्रोहं मनुष्याश्चरन्ति । अचित्या चेत्तव धर्म्मा युयोपिम, मा नस्तस्मादेनसो देव ! रीरिषः' अ० ६।५१।३ । ईडामहै देवान्' शत० १।५।३।३ । 'पूर्वाह्न एव कुर्व्वीत देवतानाञ्च पूजनम्' मनु० ४।१५२,२।१७६ । स्वा० दयानन्देन संस्कारविधेर्नामकरणप्रकरणे लिखितम् - जिस तिथि, जिस नक्षत्र में बालक का जन्म हुआ हो, उस तिथि और उस नक्षत्र का नाम लेके उस तिथि और उसी नक्षत्र के देवता के नाम से चार आहुति देनी अर्थात् एक तिथि, दूसरी तिथि के देवता, तीसरी नक्षत्र और चौथी नक्षत्र के देवता के नाम से । इत्यनेन ( १ ६४ ) स्पष्टञ्जायते, स देवपूजायाः पक्षपाती आसीत्, देवांश्च मनुष्येभ्यः पृथङ् मन्यतेस्म, अन्यथा को नाम मनुष्यस्तिथिनक्षत्राणां देवता स्यात् । तेनाऽमुष्यैव लेखस्य टिप्पण्यां तिथौ देवता इत्थं लिखिताः—प्रतिपदः—१ ब्रह्मा, द्वितीयातिथ्याः—२ त्वष्टा । तृतीयायाः—३ विष्णुः । चतुर्थ्याः—४ यमः । पञ्चम्याः—५ सोमः । षष्ठ्याः—६ कुमारः । सप्तम्याः—७ मुनिः । अष्टम्याः—८ वसु । नवम्याः—६ शिवः । दशम्याः—१० धर्म्मः । एकादश्याः—११ रुद्रः । द्वादश्याः—१२ वायुः । त्रयोदश्याः—१३ कामः । चतुर्दश्याः—अनन्तः । पूर्णिमायाः—१५ विश्वेदेवाः । अमावास्यायास्तिथेर्देवता—३० पितरः । तस्यामेव टिप्पण्यां नक्षत्रदेवतास्तेनेत्थं लिखिताः।—अश्विनी—अश्वी । भरणि यमः । कृत्तिका—अग्निः। रोहिणी—प्रजापतिः । मृगशीर्ष—सोमः । आर्द्रा—रुद्रः । पुनर्वसु—अदितिः। पुष्य—बृहस्पतिः । आश्लेषा—सर्प्पः । मघा—पितृ । पूर्व्वा फाल्गुनी—भगः । उत्तरा फाल्गुनी—अर्य्यमा । हस्तः—सविता । चित्रा—त्वष्टा स्वातिः—वायुः । विशाखा—चन्द्राऽग्नी । अनुराधा—मित्रः । ज्येष्ठा—इन्द्रः । मूलम्—निर्ऋतिः । पूर्वाषाढा—आपः । उत्तराषाढ़ा—विश्वेदेवाः ; श्रवण—विष्णुः । धनिष्ठा—वसु । शतभिषज्—वरुणः । पूर्व्वाभाद्रपदा—अजपादः । उत्तराभाद्रपदा—अहिर्बुध्न्यः । रेवती—पूषा ।

एषां मनुष्यभिन्नानां तिथिनक्षत्रदेवानां नाम्ना स आहुतीर्दापयतीतीयं स्पष्टं देवापूजा । इमानि परमात्मनामान्यपि न तन्मते, अन्यथा-सर्व्वतिथिनक्षत्राणां देवतानां नाम पृथक् पृथङ् न लिखित्वा केवलं परमात्मनाम्नैवाऽऽहुतिमदापयिष्यत्, यतः स नामोपासको नासीत्, अथचाभिन्नभिन्नानामेषां नाम्नां कण्ठाग्रताऽपि कठिना, कथन्तेनैतावान् स्वयं परेषाञ्च कृते परिश्रमो निर्व्यूढः. तत्रैतदेव

कारणं—स एतान् देवान् पार्थक्येन मेने । कथञ्चन परमात्मनामस्वीकारेऽपीदं तस्मै हविष्प्रदानं मूर्तिपूजा भविष्यति यतः परमात्मनाम्ना तद्धविर्जडाऽग्नौ स्थापितम्, यथाजडमूर्त्तेरग्रे परमात्मनाम्नाऽन्नादिकं स्थाप्यते ॥ एवं स सत्यार्थप्रकाशे पृ० ४६ संस्कारविधौ पृ० १६८ लिखति—'तत्पश्चात् निम्नलिखित मन्त्रों से बलिदान करे—' ॐ सानुगायेन्द्राय नमः' इस से पूर्व । ॐ सानुगाय यमाय नमः। × इससे दक्षिण । ॐ सानुगाय वरुणाय नमः । इससे पश्चिम ॐ सानुगाय सोमाय नमः' इससे उत्तर । ॐ मरुद्भ्यो नमः ' + इससे द्वार ओमद्भ्योनमः ' इससे जल । ॐ वनस्पतिभ्यो नमः ' इससे मूसल और ऊखल । ॐ श्रियैनमः—इससे ईशान । ॐ भद्रकाल्यै नमः इससे निऋत्य' । इयं स्पष्टं देवपूजा, यत एकैकेन ग्रासेन सानुगा इन्द्रयमवरुणसोममरुद्रादयस्तत्पर्यन्ते सानुगा मनुष्याः कथमेकस्य ग्रासस्य तृप्येयुः ( तृप्यर्थयोगे षष्ठी भवति ) अथ च उलूखलमुसलभ्यामपि बलिदानकर्त्ता किं मूर्तिपूजको न भवितुमर्हेत् ? मनुस्मृतिरपि इमां पूजामाचष्टे एवं सम्यग् हविर्हुत्वा सर्वदिक्षु प्रदक्षिणम् । इन्द्राऽन्तकाऽप्यतीन्दुभ्यः सानुगेभ्यो बलिं हरेत् ' मनुः ३।८७॥ 'मरुद्भ्य इति तु द्वारि क्षिपेदप्स्वद्भ्य इत्यपि । वनस्पतिभ्य इत्येवं मुसलोलूखले हरेत् ' ३।८८ भद्रकालीति नाम दुर्गायाः, तस्यायपि स्वामी ग्रासं समर्प्पयति, किं सनातनधर्म्माणः किमप्यन्यत् कुर्व्वन्ति ! ते चैवं कुर्व्वन्ति पौराणिकाः कथम् ! आर्य्यसामाजिकाश्च तदाचरन्तो वैदिकाः कथम् ?, कस्य वेदस्येमे मन्त्राः! सनातनधर्म्माणस्तु—'उच्छीर्षके श्रियै कुर्य्याद् भद्रकाल्यै च पादतः । ब्रह्मवास्तोष्पतिभ्यां तु वास्तुमध्ये बलिं हरेत् । ३।८९ इतिमनुमनुसृत्य कुर्व्वन्ति आर्य्यसामाजिकैरेतस्य वैदिकता साध्या, वैदिकतायाश्च सिद्धायां वेदपुराणयोरेकवाक्यता सिद्धैव भविष्यति; अवैदिकता चेत्सिद्धेद्वृक्षपूजनस्य; तह्यार्य्यसामाजिकमतस्यावैदिकता सिद्धा स्यात्। अथ च वास्तु पूजनं किं न मूर्तिपूजा नाम ? ' वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वा वेशो अनमीवो भवा नः' ऋ० ७।५४।१, 'अमीवहा वास्तोष्पते ! ' ऋ० ७।५५।१ किं वेदो नेमां पूजां समर्थयते ? तस्मात् पौराणिकदेवपूजनं वैदिकमेव । अतएव 'अदेवत्रादराधसः ' ऋ० ५ ६१।६—देवत्रा कृणुते मनः । ऋ० ५।६१।७ अनयोर्मन्त्रयोर्देवपूजनरहितात् पुरुषात् स्त्री श्रेष्ठा मता ।

× अत्र मरुद्भ्य एक ग्राससमर्पणात्तेषां देवविशेषत्वं सिद्धम् ' स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः । ऋ० ९।६१।१२ इन्द्रवरुणादि साहचर्य्यान्मरुतोऽपि देवाः । 'त्वान्नु ये वि रोदसी तस्तम्भुर्मरुतः । ऋ० १०।९४।११ किं मनुष्या रोदसी स्तम्नन्ति ? 'यस्य न इन्द्रः पिवाद् यस्य मरुतो यस्य वोऽर्य्यमणाभगः' ऋ० ९।१०८।१४ अत्रापि साहचर्य्याद् देवत्वम् ।

## ५ इन्द्रस्य देवराजत्वं स्वर्गशासकत्वादिकञ्च।

'इन्द्रज्येष्ठा मरुद्गणा देवासः' ऋ०२।४१।१५ इन्द्रजेष्ठा इति बहुव्रीहिः। 'इन्द्रज्येष्ठा अस्माँ २॥ अवन्तु देवाः' यजुः ३३।५०। 'आदित्यैरिन्द्रः सगणो मरुद्भिः। अ० २०।१२४।५ अत्र प्रतीयते इन्द्रस्य मरुदादयो गणाःसन्ति। 'दिवो अमुष्य शासतः' साम०ऐन्द्र०३।१२।७ अयं मन्त्रः सामवेदेऽन्यत्राऽपि बहुत्र—इतीन्द्रस्य नाकनायकताऽप्युपपद्यते। 'आयात्विन्द्रः स्वर्पतिः' अथर्व० २०।६४।१ स्व०ः—स्वर्गस्य पतिः।' पतिर्दिवः' साम० ऐन्द्र० ४।५।३ इतीन्द्रस्य स्वर्गपतित्वम्। 'स्वः०पतिः' साम० उत्त० ५।५।३ द्वितीयतृचे इन्द्रदेवताकेऽपि स्पष्टता स्वर्गपतित्वस्य। 'दिवि देवाः' अ० ११।७।२३ इति देवानां स्वर्गस्थानिकत्वम्। उप प्रागात् सहस्राक्षः' अ० ६।३७।१ इत्यादिनेन्द्रस्य × सहस्राक्षत्वमप्युपपद्यते, 'सम्राडस्यसुराणां ककुङ्-मनुष्याणाम्। देवानामर्द्धभागसि' अ० ६।८६।३ इन्द्रदेवताके मन्त्रेऽत्र इन्द्रस्य सुरासुरमनुष्याणामधिपतित्वं ध्वनितम्, त्रयाणाञ्च मिथः पृथक्त्वमपि सूचितम्। 'यथेन्द्रं देवा अभिसंविष्टाः' शत० ८।७।१।६।

'बृहस्पति पुरोहिता........सर्व्वे देवा देवैरवन्तु मा' यजुः २०।११ इति बृहस्पते र्देवपुरोहितत्वम्। 'बृहस्पतिर्वै देवानां ब्रह्मा' शत० १।७।४।२१ 'यस्य देवा देवताः सम्बभूवुः' अ० १६।४।४ इतिदेवदेवतानां बृहस्पतिवशवर्तित्वम्' अत्र बृहस्पतिर्देवता। 'बृहस्पतिर्वै देवानां ब्रह्मा शत० ४।६।६।७ ॥ देवास्त इन्द्र! सख्याय येमिरे' साम० उत्तरा० ६।७।३ द्वितीयतृचे, इतिदेवैरिन्द्रस्य सम्बन्धः। 'अशत्रुं मा जनिता जजान' ऋ० १०।२८।६ जनिता – सर्व्वोत्पादकः प्रजापतिः मा—माम् इन्द्रम्— इतीन्द्रस्य परमात्मनो भिन्नत्वम्। 'यस्तेऽङ्कुशो वसुदानो बृहन्निन्द्र! हिरण्ययः' अ० ६।८२।३ अत्र शचीपतेरिन्द्रस्य अङ्कुशो वर्णितः; अङ्कुशो हस्त्युपयोग आगच्छति, तेन ऐरावत्हस्तिन उपपत्तिः।

'देवा इवाऽमृतं रक्षमाणाः' अ० ३।३०।७ इतिदेवानाममृतेन सम्बन्धः। 'अश्विनौ वा देवानां भिषजौ' ऐत० १।४।१ इत्यश्विनोर्देववैद्यत्वम्। 'मा नो मेधां मानो दीक्षां मा नो हिंसिष्टं यत्तपः' अ० १६।४०।३ अनया वैदिकप्रार्थनया प्रतीयते—यद्देवा अन्येषां तपस्यामपि विनाशयन्तिस्म।

---

× 'सहस्राक्षो अमर्त्यः' अ० ६।२६।३ अ०४।२०।४, अथातो द्युस्थाना देवतास्तासामश्विनौ प्रथमगामिनौ' १२।१ निरुक्ते। ये 'अश्विनौ'। इत्यस्य मनुष्यस्त्रीपुरुषौ, क्वचिद् वैद्योपवेशकौ इत्यर्थं कुर्वन्तिः ते छलिनोज्ञेयाः। ते निरुक्तस्य दैवतकाण्डं १२।१, पश्यन्तु।

## ६ देवानां भेदादिशश्च।

'त्रीणि शता त्री सहस्राण्यग्निं त्रिँशच्च देवा नव चाऽसपर्य्यन्' यजुः ३३।७, ऋ० १०।५२।६। 'यस्य त्रयस्त्रिंशद् देवा अङ्गे सर्व्वे समाहिताः' अ० १०।७।१३ अयं मन्त्रः 'पश्यामि देवाँस्तव देव! देहे' ११।१५ इति भगवद् गीतापद्यं स्मारयति। 'तान् वै त्रयस्त्रिंशद्—देवानेके ब्रह्मविदो विदुः' अ० १०।७।२७। इत्यादि।

'प्राच्या दिशस्त्वमिन्द्रासि राजा' अ० ६।६८।३। 'इन्द्र प्राङ् तिष्ठन्, दक्षिणा तिष्ठन् यमः' अ० ६।१२।२२ (९।७।२०)। 'प्रतीची दिग् वरुणोऽधिपतिः' अ० ३।२७।३। एवमादिदिशा दिशा ज्ञेया देवानाम्।

'कत्येव देवा याज्ञवल्क्येति? त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति' शत० ११।६।३।४। 'देवजना यूयम्। इमं सङ्ग्रामं विजित्य यथा लोकं वितिष्ठध्वम्' अ० ११।६।२६ अत्र 'यथालोकम्' इतिशब्देन × देवानां भिन्नभिन्नलोका अपि सिद्धाः।

## ७ देवानामुत्पत्तिः।

'अदितिर्ह्यजनिष्ट दक्ष! या दुहिता तव। तां देवा अन्वजायन्त भद्रा अमृतबन्धवः' ऋ० १०।७२।५ एतेन पुराणाऽनुसारं दक्षदुहितुरदितेर्देवानामुत्पत्तिरमृतपायकत्वञ्च प्रतीयते 'सूर्य्यमादितेयम्' ऋ० ८।४ १२।१ सूर्यमादितेयमदितेः पुत्रम्' निरुक्ते २।१३।४। 'अदितेर्दक्षो अजायत दक्षाद्वदितिः' ऋ० १०।७२।४ देवानामितरेतरजन्मत्वेन अदितेर्दक्षोऽपि निर्दिष्टः, तथा च यास्कः—समानजन्मानौस्याताम्, अपि वा देवधर्म्मेण—इतरेतरजन्मानौ स्यातामितरेतरप्रकृती' निरु० ११।२३।४ इतिनिरुक्त—निरुक्त कथने मन्त्रोऽपि —'क उ नु ते महिमनः समस्याऽस्मत्—पूर्व्वं ऋषयोऽन्तमापुः। यन्मातरञ्च पितरञ्च साकमजनयथास्तन्वः स्वायाः' ऋ० १०।५४।३। अदितिः—अदीना देव माता' निरु० ४।२२।१ 'अदितिर्द्यौ' रित्यदितेर्विभूतिमाचष्टे' निरु० ४।२३।१ अदितिर्दाक्षायणी—इतिप्रागुक्तम् 'अतश्चक्षाथे'

---

× संस्कारविधौ १०३६ 'ओं अग्ने! प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि''''या ऽस्याः पापी लक्ष्मीस्तनूस्तामस्या अप जहि स्वाहा' इत्यादिभिर्विंशतिमन्त्रैरग्नये, वायवे, चन्द्राय सूर्य्याय चाहुतिर्दाप्यते। इमानि परमात्मनो नामानि देवानां वा? यदि परमात्मनो नामानि; तर्हि यं प्रथम एव मन्त्रः पर्य्याप्तः, इतरेऽपि समाना एव मन्त्राः; केवलं तत्र वायो! सूर्य! चन्द्र! इत्येव सम्बोधनम्,

अदितिं दितिश्च' ऋ० ५।६२।८ अत्र दित्यदिति नामोपलभ्यते । 'दितेः पुत्राणा-मदितेरकारिषमव देवानां बृहतामनर्वणाम्' अ० ७।७।१ । 'यो जात एव प्रथमो मन स्वान्........स जनास ! इन्द्रः' अ० २०।३४।१ इतीन्द्रस्योत्पत्तिः स्पष्टं प्रतिपादिता । 'अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि' ऋ० १०।७२।८। 'यं परिहस्तमबिभरदितिः पुत्रकाम्या' अ० ६।८१।३ इति पुत्रकाम्याया अदितेः (देवमातुः) 'प्रतिसर' धारणम्, एतेन वेदे इतिहासोऽपि सिद्धः । 'यस्मै, पुत्रासो अदितेः, प्रजीवसे, मर्त्याय । ज्योतिर्यच्छन्त्यजस्रम् । ऋ० १०।१८५।३ यजुः ३।३३ इत्यदिति पुत्राणां देवानां मनुष्याय ज्योतिष्प्रदानम्, एतेन देवमर्त्ययोर्भे-दोऽपि सिद्धः ॥ 'कद्रू सुपर्ण्यो' र्वर्णनं शतपथे ३।६।२ द्रष्टव्यम् । (क्रमशः)



## भारतावनत्युन्नति-बीजविमृष्टिः ।

(पूर्वतस्सम्बद्धा)

ले०—के० टी० रामशरणशर्मा शास्त्री
आर० ई० आई० कालेजाध्यापकः—आगरा ।

समालोडित-विविध-विषयपयः-पूरपूरितानेकग्रन्थसमुद्राः, वस्त्य-वसत्यनेकदेशविहिताटाट्योपार्जितासङ्ख्यसुमुद्राः, स्वीयसाङ्गोपाङ्गवेदषट्-शास्त्र-पुराणेतिहासाद्यनवद्योपदिष्टितरुणतरणिकिरण-प्रभापसारितानेक-विश्व-वालिश-मानव-मनोऽज्ञानान्धतमसनिलीनानाचारकौशिकसमूहाः, काणाद-गौतम-कापिलपातञ्जल-जैमिनप्रभृति-विविधशास्त्रीय-सूत्रशब्दातिक्लिष्टपंक्ति-पंक्ति-परिभाषाशाब्दबोध-परिष्कृति-शास्त्रार्थाध्ययनाध्यापन-समुत्पन्न-समुत्कृष्ट-समूहाः, प्रत्यहोषासासूर्यानुष्ठितप्राणायामपरेशध्याननिलीनतावधूताशेषकल्मष-स्वार्थपरजायानिकायादिमायापत्तिमुत्सममसौख्यदुःखा अपि इदानीन्तन-धर्मध्वं-सिजनास्पृश्यशुद्धिसहासनाशनाद्यायासव्यस्यासत्रासलब्धवृद्ध्युच्छ्वासमात्राभि-व्यञ्जितनैजदुःखाः, अन्ये तु, अस्पृश्योद्धृति-तत्सहासनाशनाद्युद्दिष्टिसुधार-कम्मन्यानाम् बोभूयमानासु सभासु—"चर्मकाराः ! सर्वं येते निरसु-स्व स्व-शवानुत्थापयन्ति, यज्ञोपवीतादिकर्मसु कथञ्चित् त्रुटितवातमजाजिनमात्म-हस्तैर्योजयन्ति, मृग-मृगाधिपत्यादिकृत्याद्युपविष्टाश्चापचिता वलोक्य-न्त्ययिति नेमेऽस्पृश्याः, कथं पुनस्तदेव कुर्वाणा भवन्तोऽपूता घृणास्पदीभूताः ? यद्येवमेव, तर्हि मा निरसुपशुशवानुत्थापयन्तु, समाकर्ण्यसूतिकाकार्यनालच्छे-दादिवर्णान् कर्णान् पिदधतु-दधतु उपनीतम्, समानीतं भवद्भिः पेयम् नो

(अस्मभ्यम्) देयम्, हेयम् चर्मोन्मन्थनादि। श्वपचाः ! पापघ्नो वयमेतैकत्र भद्यम् जाहतु हेतुमस्पर्शादिकस्य मरीमृजाम् विश्वस्य, विश्वस्य तिष्ठध्वमस्मासु कासुचिदपि परिस्थितिषु नो नो हेयाः, करमेया अपि वयं हिन्दव, कथं विभक्ता निध्येयाः। एकोपादानकारण-कनक कटक कुण्डलयोरिव भूतपञ्चकनिर्मित सकलशरीरेष्वस्मासु का भिदाऽभिधाया ऋते ? कथं न यूयं मन्दिरादि प्रवेशार्हाः, जनुषा न कोऽपि चर्मकारो नापि श्वपचादिरपि तु तत्तत्कर्मकरणेनैव तज्जातिर्जायतेऽतस्त्यक्त-तत्तत्कार्येषु युष्मासु, यूयमपि क्षालितगुदमार्जितवामकर इव शुद्धाः सर्वकार्यलब्धाधिकाराः यथेष्टजातिनामभिस्स्वान् व्यपदेष्टुमीशिध्वे। जातिरखिलाऽऽधुनिकी। कृत्यञ्च वोऽखिलं स्वार्थपरप्राचीनब्राह्मणादि-निर्णीतम्। कथमन्यथाऽच्छाच्छकार्याणीमे स्वीकृतवन्तः ! किं भोजम् भोजं यदन्नं विमलं मलीकृतवन्त एतयेव, तन्मरीमृजैवास्यर्शादि हेतुर्यैं न भवन्तो न्यञ्चोनोऽसभ्यञ्चश्च। बाला एषां गुवन्ति यदा तदा नैतेषां योषितां हृदि समुत्पद्यते जातिगरिमा, मरिमार्ष्टि सहर्षोत्कर्षमन्यतमा गृहयोषित् अकृतस्नाना, तदेव वसनं वसाना नानाविधजग्धिपीतिकार्येषु व्यापृताऽऽदृता च जायते। स्वगुदप्रक्षालनञ्च कृतभवदस्पर्शादिदृढसङ्गरानरा अपि यथासम्भवमन्वहं चर्कत्येव। प्रतिसरिदादिघट्टम् वसनसितीकरणादिरजककार्यमपि न केषामप्यप्रत्यक्षमिति १ सभं, सभं, युष्माभि, कुर्वन्तोऽपि "च्युतिस्तु दूरे आस्ताम्" न प्रायश्चित्तिमप्यर्हन्ति प्रत्युत स्वनिर्मितनियमसमासादितस्वातन्त्र्येण "शूद्रा इमेऽनभ्याशमित्या" २ इत्याचक्षते। अतोऽबलानां वयम् उद्धर्तारः। अयंहि स्वराज्यान्दोलनमयः समयः। "स्वल्पानामपि वस्तूनां संहतिः कार्यसाधिका इत्याश्रित्य सर्वेषामेकीभाव एव स्वराज्याप्तिप्रबलशस्त्रम्। अत एव विविधस्थलेषु "जाति पांति तोड़बिल" "छुआ छूत ढांगमरोडबिल' "मन्दिर प्रवेशबिल' इत्यादिविलानि चाख्याययन्ते। पूरीकुर्वन्त तेषु "पोंगापन्थिनः" स्वराज्यपरिपन्थिनः सनातनधर्मावलम्बिनः। ऊरीकुर्वन्तु नो नूतनमुपदेशम्, दूरीकुर्वन्तु नालच्छेदननिरसुपशूत्थापनमार्जनवसनशोधनादिकर्माणि, वर्माणि सन्नह्यन्तु भवकन्तोऽपि ब्राह्मणक्षत्रियविट्त्वादीनाम्, दीनाञ्च स्वकीयां दशामपनयन्तु, यन्तु यथेष्टमिष्टदेवालयान्। आलयेषु च येषु जातमन्वहञ्चर्मोन्मन्थनादि, नादियुगतः कदापि हर्य्यर्चाचर्चा, वाचयन्तु तेषु भागवतादिपुराणानि, पुराणानि कर्तव्यानि दूरेऽपास्यानि। भवन्तस्तु हरिजनाः। हरिश्च न कस्मैचिद् द्रुह्यति। तस्मै भक्तिरेव

१ सर्वे + एते इति सन्धौ यलोपाभावो वैभाषिकः एवमुत्तरत्रापि यत्र कुत्र ज्ञेयम्।

रोचते। यक ३ एव तद्भक्तस्सक एव तत्प्रेयान्। स च द्विजो वा ४ निष्ट्योवेति न तुलाधृतम्। पश्यन्तु! नान्यस्मिन् कस्मिन्नपि देशे एतावान् स्पृश्यास्पृश्य-भूतोऽवलोक्यते तेनैव तद्देशानां तथोन्नतिरिति यावद्वयं सर्वमेलनं न करिष्यामः, नापि च अपरस्परा ५ अरिष्यामः, तावद्यदर्थं कोटिशो नेतारः कशाभिस्ताडिताः कारागारान्नेनीयन्ते, खपुष्पास्पदीभूतमाश्चर्यं यदि तत्स्वाराज्यं ६ स्यात्। अतो हस्तपादादिवत्प्रतिष्कशा ७ यूयमस्मन्मान्या एव ८ इदमेवास्तकिंजगन्मान्य-गान्धिमहोदयानुशासनम्। सचानशनपरिस्फुलल्लोलशिखशिखिनि, भवदस्पर्शा-दिनिदानमलवाहनाद्यनाचारशीताङ्गारकम् स्वीयक्षान्तिजलञ्च प्रक्षेपं प्रक्षे-पम्, सनिश्श्वासनिःसृततद्धूमवलेन नेतृवृन्दधूमगन्त्र्याकर्षकयन्त्ररूपोऽभि-योगसेतोरुपरिप्रसारिताभ्यामहिंसाऽसहयोगायःपट्टिकाभ्याम् पारतन्त्र्याम्भो-धेरस्मानुत्तारयिष्यति। सर्वमेतद्दिदृश्यैव तथा वलीपलितः ९ सोऽभ्याचृत्याऽनशनं विधत्ते, धरो ऽप्रमत्ते चरणे च रणेऽसहयोगस्य अभियोगस्यै कैकशो नियमान् समा-धत्ते, तत्तेजोऽपराभावित विस्पष्टानुभावितधैर्यधिषणावधीरितधीचणाङ्ग्लजन-समक्षेऽप्याक्षेपमुक्तमभिधत्ते, विधत्ते नान्यनूतनतरसरणिमराजकतामार्गेऽपि, मार्ग्येऽपि मङ्क्षुपारतन्त्र्य-यन्त्र-यन्त्रित-मातृभूमिपादरूपकलंके, लङ्केश्वरसजा-तीयशेमुषिमुषितस्वाधीनतो, नतोऽपि च भूत्वा न तिरोधत्ते राष्ट्रियकार्यतः, पिधत्ते च न कर्णौ वर्णौ समाकर्ण्य "जेल" इति नाम्नः, प्रदत्ते सर्वत्र व्याख्यानम्, आदत्ते राष्ट्रियपताकाम्, अवरुणद्धि चाद्य मद्यपानादिकम्, विरुणद्धि च परिणद्धकन्धरग्रामणी ग्रामीणकरादाने। तच्च सर्वमवलोकमवलोकम्, वहवोऽ-परेऽपि भारतीया गान्धिमहोदयोपदिष्टिमुरसिकृत्य "स्वातन्त्र्यतन्त्रीमवलम्ब्य मातृभूमिमुपवीणयिष्यामस्तन्मयतां वोपेस्याम" इति कृतदृढासहयोगसंगरसङ्गरा नरा अनुभवन्ति राजकीयापसदकर्मचारिप्रचण्डदोर्दण्डान्, ब्रह्माण्डाकम्पि-घोरघर्घरघोषघोरशतघ्नीकान् धिक्कुर्वन्ति च परिकलितव्यनीकान्, सैनिकान् उररीकुर्वन्ति शतसहस्रमुद्रादण्डान्, दूरीकुर्वन्ति पुत्रकलत्रभृत्याद्यपरिमित-

१ एकत्र समं सर्वमपरत्र तुल्यम् तेन युष्माभिरिति—'तुल्यार्थैरिति तृतीया। २ 'इत्येनाभ्याशस्य' इतिमुम्-दूरतःपरिहर्तव्या इत्यर्थः। ३ यवशब्दात्सावकच्। ४ निर्गतो वर्णाश्रमेभ्य इति निष्ट्यश्चाण्डालादि। निसोगते इतित्यप ततो ह्रस्वात्तादाविति षत्वे ष्टुत्वम्। ५ अपरस्पराः क्रियासातत्ये इतिसाधु सततमविच्छेदेन न यावद् गमिष्याम इति तत्वम्। ६ यदायद्यो रूपसङ्ख्यानमिति साहाय्येन जातु यदोरितिलिङ्। ७ 'प्रतिष्क-शवचकशेः' इति साधुसहायाः पुरोयायिनो वेतिभावः ८ तिङश्च' इत्यकच। ९ पौनःपुन्येन।

भूमिखण्डान्, अवशिष्टवयो यापयन्ति कारागारेषु, यशः स्थापयन्ति भारत-जननीसत्पुत्रसमाहारेषु, इत्येवं जागरामयेऽपि समये जर्जरधर्मखञ्जटिका-मालम्बमाना इमे धार्मिकम्मन्याः तमेव प्रत्नरूढ़िरागं गायन्तीति भवतां तिरस्का-रेण भारतमात्रं गर्तें पातयत इमानपहाय स्व-जगदुन्नतिमार्गोऽवलम्ब्यताम् तदैव सम्बोभवीति सर्वथा शिवं नान्यथा" इत्यादिवोचः श्रावम् श्रावम् नायक-म्मन्याः !!! मैवं, स्वहस्तैरेवानाचारैधमव्रश्चनमादाय सनातनधर्मवृक्षच्छेदन-मिच्छत। धार्मिकमार्गध्वस्तो न कोऽपि, कदापि, कुत्रचिदपि, कथमपि, समुन्नति-मलभत। पुरापि धर्मसञ्चरम् चूर्णपेषं पिंषन्तोऽन्ते स्वयमेव पिष्टा नावशिष्टाः केऽपीति न तिरोहितमैतिह्यज्ञेषु प्रज्ञेषु—किञ्च :—

ब्राह्मणोऽस्य मुखमासी द्वाहूराजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत॥ ऋ० सू० ६।मं०१२
लोकानान्तु विवृद्ध्यर्थं मुखवाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्तयत्॥ म० १-३१
ये वै परिग्रहीतार स्तासामासन् वलीयसः।
इतरेषां कृतत्राणान् स्थापयामास क्षत्रियान्॥
उपतिष्ठन्ति ये तान्वै यावन्तो निर्भयास्तथा।
सत्यं ब्रह्म यथा भूतं ब्रुवन्तो ब्राह्मणाश्च ते॥
ये चान्येऽल्पबलास्तेषां वैश्य संकर्मसंस्थिताः।
कीनाशा नाशयन्तिस्म पृथिव्यां प्रागतन्द्रिताः॥
वैश्यानेव तु तानाहुः कीनाशान् वृत्तिसाधकान्।
शोचन्तश्च द्रवन्तश्च परिचर्यासु ये रताः॥
निस्तेजसोऽल्पवीर्याश्च शूद्रास्तानब्रवीत्तु सः।
तेषां कर्माणि धर्मांश्च ब्रह्मा तु व्यदधात्प्रभुः॥

संस्थितौ प्राकृतायां तु चातुर्वर्ण्यस्य सर्वशः॥ ब्र० पु० ७ अ० १५३-१५८ इत्यादि श्रुति-स्मृति-पुराणानां परश्शतप्रमाणानां वर्तमानत्वेऽपि कथं जाति-राधुनिकी ? कथम्वा तत्कर्मविभक्तिरस्मत्कृता ? यश्चायं वर्णविभागो नैसर्गिक-त्वेन न केवलं मनुष्येष्वेवापितु—

ब्रह्म वै वृहस्पतिः, यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमोरुद्रः पर्यन्यो यमो मृत्युरीशानः स विश्वमसृजत्। यान्येतानि देवजातानि गणशो व्याख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुत इति" (श० कां० १४)।

ब्रह्म वा अजः । क्षत्रं वा अश्वः । वैश्यञ्च शूद्रञ्चानुरासभः ( श० ) ब्रह्म वै पलाशः ( श० ) क्षत्रं वा एतदौषधीनां यद् दूर्वा ( ऐ० ) गायत्र्यश्च छन्दसा ब्राह्मणः ( ऐ० ) ।

एवमिन्द्रादिदेवेषु, अजाश्वगर्दभादिपशुषु, वृक्षलतादिषु, गायत्र्यादिच्छन्दस्स्वपि चावलोक्यते कथं तस्याधुनिकत्वं प्रतिपादयतां भवताम् चक्षूंषि निमीलितानि ? इत्थम् न केवलं वर्ण-कर्म-विभाग एवापि तु महत्या तपश्चर्ययोपार्जितेन विज्ञानेन तत्तद्गुणदोषौ विविच्य मनुष्येषु तदितरप्राणिषु च स्पर्शास्पर्शसहासनाशनारोहणपालनादि व्यवस्थानियतिरपि पूर्वर्षभिरेवाकार्य्यत एव, आहारादिसाम्येऽपि अश्वादीनामेवारोहणम् गवादीनामेव पयःपानम्, शुकसारिकापिकादीनामेव गृहेषु पोषणम्, तत्तत्स्पर्शश्च, न च खरादीनाम् नापि गर्दभ्यादीनाम् गृद्ध्रादीनाञ्चेति । एवं परित्यक्तासत्कृच्छ्रकृदाहारायाः शुन्याश्शूकर्या वा तत्तद्रजोरेतोभ्यामुत्पन्नस्य तच्छरीरस्य, तज्जातेश्च तस्मिन्नेव जनुषि सर्वथा परिवर्तयितुमशक्यत्वेन गवादिभिस्सहासनाशनाद्यसामानाधिकरण्यवत्, परित्यक्ततत्तत्कर्मणामप्यस्पृश्यानाम् स्पृश्यैस्सहासनाशनाद्यसामानाधिकरण्यं निश्चप्रचम् । एवञ्च दधिमृत्स्नादिक्षालितेनापि गुदेन मुखस्य, मुखेन च गुदस्य, हस्तयोः पादाभ्याम्, पादयोश्च हस्ताभ्याम् यथा कार्यं विधातुम् दुःशकम्, यथा वोष्णीषस्य शिरस्येव धारणमुपानहोश्च चरणयोः, कङ्कणाङ्गदादीनाञ्च तत्तत्स्थानेष्वेव नतु तत्प्रातिकूल्येन, एवमस्पृश्यानामपि यत्कर्म ब्रह्मणा निर्णीतम् तदेव तेभ्यश्श्रेयो नतु तद्व्यतिरिक्तम् । एतदेव—"अतः पुम्भिर्द्विजाः श्रेष्ठाः, वर्णाश्रमविभागशः । स्वनिष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम्" इत्यादिना भागवते व्यासेन तथा "स्वेभ्यः स्वेभ्यः स्वकर्मभ्यश्चतुर्वर्णा ह्यनापदि । पापान् संसृत्य संसारान्प्रेष्यतां यान्ति शत्रुषु" इत्यादिना मनुनाऽपि च प्रत्यपादि । अतः स्व स्व-कर्मसहायोपायोऽवसायो नूनं सर्वोन्नतेरिति स्वव्यवसायपराँस्तान् ( शूद्रान् ) अपि निर्व्यवसायिनो विधित्सवोमाऽधुना निर्व्यवसायास्पदीभूतत्वेन शिथिलप्रायमेतद्भारतशरीरं स्वकपोलकल्पितानर्थकवितण्डावाददण्डाघातैश्चूर्णयन्तोऽधः पतितमप्युल्लुण्ठयन्तु । "यतोऽभ्युदयनिश्श्रेयससिद्धिः स धर्मः" इत्यादि शास्त्रे वेदविहितकर्मजन्यो धर्म एवाभ्युदय कारणं निरदेशि । उत्पथेन च गच्छन्निच्छन्नपि नहि कोऽप्यद्यावधि स्वं स्वराष्ट्रं वोन्नमयतिस्म" इत्यादि व्याहरन्तो वर्णाश्रम-धर्मध्वंसाद्येव भारताधःपातस्यादिकारणमामनन्ति ।

अपरे च "व्यर्थोऽयं लक्षितपरोपदेशपाण्डित्यानामेषां ब्राह्मणब्रुवाणा-

मालापः अन्यानिमयेवम् १ तर्जन्या निर्दिशन्तीति दीपोपमानमेतेषामपि स्वाध्यायाचारविचारपूर्वकाप्रत्यूहव्यूहोपलब्धशर्माणि कर्माणि, प्रत्नान्याधुनिकानि च किञ्चिज्ज्ञानचक्षुर्लक्ष्यीक्रियन्ताम् । क्वाधुनैषां तथाऽलौकिकशक्तिः ? क वाङ्मनसनिरोधः ? क्वानुपमपवित्रज्ञानम् ? क ते तपस्तेजसी ? क्वाहर्दिवमृग्यजुषाद्यध्ययनाध्यापने ? क च धर्मकर्मणी ? क्वाखिलविद्याधीतिबोधाचरणप्रचाराः ? क्वपरेशसाक्षात्कारपर-पर-द्रविण-दाराभिसंहितलोष्टव्यवहाराः ? वन्यफलमूलमात्राहारास्ते ते सदाचाराः । विश्वस्मिन्नस्मिन् कस्मिन्नपि समये इम एवासन् स्रष्टुं २ कलः स्रष्टुमपरां संसृतिमात्मशक्त्या । कर्त्तुं प्रभूवभूवुर्भवं भस्मसान्नैजाञ्जलिजलनिक्षिप्त्या । रङ्कयितुं परिवृढम्, प्रभयितुञ्च कौक्कुटिकम्, मेरयितुम् परमाणुम्, महामहिमहिमालयमपि द्व्यणुकमिवाकलयितुम् एतेषामेवासीदमोघा शक्तिः । य एते कुशपाणयोऽपि विश्वशासकवाणयः, कुशासना अपि सुशासनाः विविधशास्त्रमर्मज्ञा अपि स्वकर्मज्ञाः स्वीयविक्रमविशिष्टबुद्धिविकाशत्रासानाचाराज्ञाननाशका अपि स्वतपःप्रभावाविष्कृतनित्यनूत्नचमत्कृति-प्रकृति-प्रतिविकाशकाः, वीरत्वे भार्गवकृपद्रोणमहिमानः, धीरत्वे गौतमवशिष्ठगरिमाणः, इत्यादि कथं नचलिख्येत, को वा शक्ता भवेत् ? यद्बले पुरन्दरोऽप्यत्यादरः, विष्णुरप्यपत्रपिष्णुरासीत्, अद्यत्वेऽप्यवलोक्य यद्रचितसद्ग्रन्थनिचयमात्मशिक्षाग्रहणाग्रहिला दरीदृश्यते मानवप्रकृतिः, प्राणायामपरायणा ये मंक्षुन्यमांक्षुर्ब्रह्मानन्दे, यत्र च चारितार्थ्यमप्रथत् "तत्त्वज्ञवृन्द" इत्यभिधानम्, पार्श्वोनुचर इवाचरद्येषामन्तिके विश्वावाट्, त एवाधुनाहितहितकरधर्मकर्माणो भस्मावशेषाशुशुक्षणिः क्षौणीभारभूता, भूताशेषकुथाम् न कथं कथमपि स्मरन्तः केचिद्दौवारिकत्वे, अन्ये प्रपाप्रपालकत्वे इतरे वसितासितवसनाः सना ( सदा ) धूमगत्यादिषु रक्तहरितादिपताकादर्शकत्वे नत्वेञ्जादिविविधाधिकारकान् कान् कान् तिरस्कारान् सहन्ते हन्तेह नतत्परोक्षम् । पौरोहित्य-पुजारि-पण्डा-पाण्डित्यादिविशिष्टप्रकारचतुष्टयीकर्त्तव्यन्त्वलं प्रपंच्येत्यग्रे गुव एत एव स्वयंपथोविचलिता भारतीयानन्यानंनीनशन्निति नेतरेषां दोष इत्यादि निगदन्तो विप्रानेव तत्स्थाने नियोजयन्ति ।

किन्त्वयि ! पाठकमहाभागाः ! सूक्ष्मेक्षिकयावलोकने नैकतमदप्युपरिष्टान्निर्दिष्टं कारणं भारतावनतौ प्रत्यक्षता पाद्यते । वस्तुस्थितिस्त्वियं

---

१ इमे+एवम् लोपः शाकल्यस्येतिवैभाषिकयलोपाभावः । शकॢधातोरनुकरणे जस् ।
२ प्रभुंकरोतीतिणाविष्ठवद्भावेन टिलोपे धातुत्वे तुमुन् । कौक्कुटिको भिक्षुरिति संज्ञायामित्यादिसूत्रे दीक्षितः ।

यत्सर्व एव देशा व्यवसायेनैव स्वीयामखिलामुन्नतिं कर्त्तुं प्राभूवन् वयञ्चेदानीं न तथा व्यवसायिनो यथा आस्म । गृहे एकः कश्चित्कथञ्चित्स्वीयोद्योगेन किञ्चिदुपार्जयति इतरे च तेनैव स्वल्पेनार्थेन स्वोदरपूर्तिपूर्वमन्याऽवश्यकतां पूरयन्ति । कुर्वन्त्वेव वा वराकाः किम् ? भृतिस्तु तेषां कृतेऽपि दुर्लभैव, ये स्वं सर्वस्वं व्ययीकृत्य स्वान् बी० ए० एम० ए० आचार्यप्रभृत्युपाधिभिरलंकृतवन्तः किमुत साधारणानाम् । औद्योगिकधन्धृणविज्ञानकृषिकलाकौशलादिव्यावसायिक विद्यालयानाञ्चाभाव एव भारते, येषु निर्विशेषं स्वावलम्बित्वमध्याप्येत भारतीयाश्चापि मनुष्या स्युः, प्राप्नुयुश्च स्वकर्तव्यपालनपूर्वकं कर्मशीलतागौरवम् । आदद्युश्च स्वीयबुद्धिविभवेन स्वदेशशासनकविकामात्महस्तैः । यद्यपि यस्मिन् भारते कस्मिंश्चित्समये पक्षिणः, कोलकिराता अपि चासन् विद्वांसः, चित्रादिरचनेऽबला अपि आसन् सबलाः सिद्धहस्ताश्च, तत्रेदानीमपि अनुमानतः २२८२२६ संख्याकेषु पुम्विद्यालयेषु अनुमानत ७६७३४४ संख्याका विद्यार्थिनस्तथा २७४२५ बालिकाविद्यालयेषु १००२०३२ अन्तेवासिन्यश्च शिक्षामधिगच्छन्ति । किन्तु किं तया सर्वस्वनाशमात्रार्थया शिक्षया ? या केवलम् अन्येषाम् भृत्या भवितुम्, तेषामुपानहो मार्ष्टुम्, अन्ततो गत्वा शतार्द्धेन शताय वाऽऽत्मानम् विक्रेतुमुपादीयेत, यस्याश्चाभ्यासं कुर्वन्तो वयमध्ययनदशायाम् विविधविचारपरम्परापरिकल्पितयानान्यारुह्यान्वहमुत्तरोत्तरम् स्वभाग्याकाशमार्गमतिचिक्रमिषवोऽपि अन्तेऽनुपलब्धभृतिस्थानोपसञ्जातनैराश्यझंझावातपातितोक्तयाना नानादुःखमहागर्तमधिशयाना भवेम । अतो मम हृदयं त्वेष विचारः पास्पृशीति यद् विविधविषयग्रंथाध्ययनाध्यापनलेखनशिक्षया सह यावदस्मद्देशे औद्योगिक विद्यालयराहित्यम् अभावश्च यावदनुजनमुद्योगस्य, तावत्सर्वथैवोन्नत्यसम्भवः । यद्यप्येवंभूतविद्यालयोद्घाटनम्प्रचुरधनमपेक्षते तथाप्येतत्प्रश्नस्य इदं समाधानम्—प्रति प्रान्त जनताप्रहितमनोनीतपञ्चषविशिष्टभारतीयसंस्कृतैंग्लिशादिविद्वत्प्रकाण्डाः, धनिनो मानिनश्चैकत्र निर्दिष्टस्थले समवेता भारतोन्नतिमार्गानुपदिनः काँश्चिदेवंभूतान् नियमान् निर्मिमतां याँश्च सर्व एव भारतीया अनुसरन्तु, तदवहेलकश्चाखिलेभ्यो बहिष्कार्यः । विद्यालयोद्घाटने मान्या भारतीयधनिनो धनसाहाय्यमाचरन्तु । इतरे च भारतीया निरर्थकशुष्कैंग्लिशापरीक्षाः समुद्दिश्य यदपरिमितधनव्ययं कुर्वन्ति, यच्च संस्कृताध्यायिनां पाठशालासु स्वाशनसामर्थ्याभावेऽपि परीक्षाप्रवेशकालेऽनालोचिततदात्वायतविभागानां परीक्षाशुल्कमार्गव्ययदानरूपम्, एवमर्बुदशोधनमन्वब्दं वर्तमान-परीक्षाकोशगतं

पिपर्ति तत्सर्वमवरुध्य पूर्वोक्त-विद्यालयोद्घाटनार्थं सञ्चीयेत । हिन्दीज्ञा अपि एवमेव यथाशक्ति साहाय्यमाचरन्तु । अपठितजनतातोऽपि च यथाशक्ति धनमादातुं माननीयाः पण्डितमहोपदेशकमहाभागाः परिश्रमं विदधतु । एवं विविधप्रयत्नपरेषु, समनुभूतानल्पदुःखेष्वपि च यद्यपि नैकदैव बहूनां तथा-भूत-विद्यालयानामुद्घाटनं भविष्यति, तथापि "सुखं हि दुःखान्यनुभूय शोभते" इत्यनुसृत्य सन्तुष्टेषु अस्मासु, क्रमशश्च तत्तद्विद्यालयसमासादितचातुर्येषु स्वावश्यकवस्तुनिर्माणेनैतद्देशीयधनस्येहैव स्थित्यामुत्तरोत्तरधनप्राचुर्येणावश्यक-तानुसारं प्रतिस्थलमनेकेषां तथाभूतविद्यालयानामुद्घाटने न कस्याश्चिद-प्यापत्तेर्लेशोऽवशेक्ष्यतीति—

'सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्' ॥

इति पुनरपि भारते भास्यति । उदाहरणार्थं दयालबाग़ेऽस्मिन् भारते एव एका तथाभूता संस्था सञ्चालिता वर्तते । यस्याश्च विभिन्नविभागेषु अनेकावश्यकवस्तूनि निर्मीयन्ते । उपकरोति चैषाऽन्वहम् सहस्रशो जनान्, तत्रापि च न केवलमिहत्यानेवापि तु वैदेशानपि, नापि च पठितानेव अपि त्वपठितानपि । अस्याश्च सञ्चालकमहाभागा अस्मद्देशीया एव सुशिक्षिता महोदयाः, ये च भारतीयविभिन्नस्थानतो विदेशतश्च विविधावश्यकवस्तु-निर्माणशैलीं विबुध्येहागत्य स्वयम्, इतरैरपि च समासादितविविधचातुर्यैः भारतीयभृत्यैर्विद्यालयीयविद्यार्थिनः सुशिक्षयन्ति । तेभ्यो निर्माप्य च विद्युद्घटिका विद्युद्धवित्राणि, फौण्टेनपेनग्रामोफोन-विविधभारौषध्यादिमापक-सूक्ष्मातिसूक्ष्मयन्त्राणि तुलादीनि, और्णानि-कौशेयानि, सौत्राणि च वस्त्राणि, हिरण्मयानि, राजतानि च विविधालङ्करणानि, उपानहः, अन्यान्यपि चैतदतिरिक्ता-वश्यकवस्तूनि विदेशेषु भारतीयान्यभागेषु च प्रेषयन्तीहोपयोजयन्ति च । एतदपेक्ष्य काष्ठविविधवस्तुनिर्माणकौशलम्, मृत्तरादि-चालनमपि च शिक्ष्यते, एवं नानाविधयोद्घाटितोन्नतिद्वाराणां संस्थानां भारतीयप्रतिकोणमावश्यकत्वं वर्तते । तथाभूतसंस्थायाः सुचारुसञ्चालनञ्च भारतीय-मातृभाषापेक्षया कार्यसञ्चा-लनपरिमितान्यभाषाज्ञानमप्यपेक्षते, एतस्य च सर्वस्य सौविध्यं तथा भूतेष्वेव विद्यालयेष्विति तेषां नितरामावश्यकता ।

एतच्छन्देनैव[1] मया १९८९ वैक्रमाब्दीय-'सूर्योदया'-श्विनसङ्ख्यायाम्

1 छन्दोऽभिप्राय आशयः ।

श्रीशिवशङ्करझामहोदयलेखस्योत्तरे स्वकार्यसञ्चालनपरिमितसर्वविधविद्याभ्यासावश्यकत्वं प्रादर्शि, किन्तु चक्षुषी निमील्य तत्सूर्योदयसङ्ख्याः पठद्भि र्झोपाह्वमहोदयै र्यत्पुनरपि तदब्दनवमसङ्ख्यायां "तत्र प्रष्टव्यमस्ति—" इत्याद्यन्वयोजि तदुत्तरस्य मदीयेन तच्छीर्षकेण, तल्लेखध्वनिनैव च गतार्थत्वान्मुहुरुट्टङ्कनस्यानावश्यकत्वमाकलयता मया पुनस्तदाग्रहेण तदैव लेखनी न व्यापारि। तथापि स्वदेशभाषाज्ञानसमासादनपूर्वकस्वार्थसाधनपरिमितान्यभाषाज्ञानसमासादने यद्भारतीयेषु वकत्वमन्यदेशीयेषु च हंसत्वमारोपि, तेन तु पराकाष्ठैवाभिव्यक्तीकृताऽऽचार्यत्वस्येति तन्नाधुना किमपि गदितव्यमस्ति— 'नाहं सुरभारती-तिरस्कारक-दुर्मतिः ('तत्र तु वैमत्यमासादितदौर्मत्यस्येत्यादिनैव प्रकटितत्वात्) शार्मण्यादिदेशीयाः संस्कृतज्ञा विद्वांसः शास्त्रसागरमालोडयामूल्यरत्नानि विदित्वा बहुश इमां सुरभारतीं स्तुवन्ति' इत्यहमपि जाने, मन्ये च—वयं शास्त्रज्ञानविहीना रत्नान्यन्वेष्टुमन्यत्र गच्छामः' अस्माकं विद्यासु किं विज्ञानं किं वा कलाकौशलं किम्वाध्यात्मज्ञानमवशिष्टमस्ति यदर्थं परमुखापेक्षिता भवेत्' इत्यादि, किन्त्वत्र प्रष्टव्येयम् 'श्रीमन्तो हि साहित्याचार्याः, वेदव्याकरणकाव्यधर्मशास्त्रतीर्थाश्च, एवं शास्त्रज्ञानप्रकाशिताः कानि कानि खलु कलाकौशलविज्ञानवस्तुन्याविरकार्षुः" यैश्च भारतीयहीनदीनजनताया अपि निर्विशेषं सञ्जातस्स्यादुपकारः'? नाहं टाइपराइटरादिष्वपि विमुग्धहृदयः अस्य ममोपालम्भस्य च्छन्दस्तत एव चक्षुरुन्मील्य पठद्भिर्भवद्भिरवगम्यताम्। यच्चापि-'कश्चिदपि कस्मिन्नपि विषये प्रौढतरो विद्वान् न भवति' तदपि न यः सम्यक् शास्त्रं पठति, पठिष्यति, पठिता वा स प्रौढतरो विद्वान् भवति, भविष्यति भविता वा। अन्यथा विश्वविद्यालयादि-विविधकालेजान्यविशिष्टसंस्थासु चाध्यापकाद्यध्यापनादियोग्यत्वाभावेऽद्यैव तत्तद्विशिष्टमहर्षिप्रणीतग्रन्थनिचयरूपसम्पत्तेरुच्छेदापत्तिः स्यात्। अस्तु किमेतया काकदन्तपरीक्षया।

प्रकृते साश्चर्यं यन्नाद्यापि भारते विदुषां न्यूनता, किन्तु समयप्रवाहस्यान्यथा भूतत्वान्न वयमेवं पतितस्य स्वदेशस्योत्थापने निरुक्तविधवोद्वहनापवृत्यभावास्पृश्यस्पर्शादिरूपधर्मध्वंसेन, नापि च केवलं मातृभाषायैव समर्थाः पारतन्त्र्यात्, अपि तु तत्पतनमूलकसकलकारणापनयनेनैव। यत्र चादिमं कारणम् विदुषामप्यकार्यित्वम् (बेकारी) यच्चौद्योगिकविद्ययैवापनेयम्, औद्योगिकविद्या चाधुना विविधभाषा-कलाकौशलाद्यध्यापनविद्यालयानपेक्षते। अतोऽस्माकमगत्या कर्तव्यमिदमिदानीमायाति यत्सङ्घीभूतास्तथा प्रयतेमहि नये तथाभूतविद्यालयानां समुद्घाटनं सञ्चालनञ्च स्यात्। एवंकृते तु विविध-

भाषाभाषिणो भारतीया भारतादन्यभाषासु विदेशेषु च गतामात्मनीनां कला-कौशलादिविद्याम् बोधम् बोधम् क्रमशः पुनरपि स्वीयभाषासु स्वदेशेषु च प्रत्यानयन्तो नानुद्योगिनश्च तिष्ठन्तः स्वातन्त्र्येण पुरातनं वेदवेदाङ्गादिषु प्रतिपादितं भारतीयगौरवमन्यान् प्रदर्शयितुमलमित्यत्र न सन्देहलेशः ।

---

# व्यायामः ।

ले०—श्री उमाचरण दीक्षितः· बलदेव सहाय सं० म० विद्यालय, नयागंज, कानपुर।

असारेऽस्मिन् संसारे सर्वेषां प्राणिनामियं नैसर्गिकीच्छा यत्कथमपि सुखमधिगच्छामो येन चैहिक-भोगपदार्थान् समुचितप्रकारेण भुक्त्वा परलोकेऽप्यानन्दमधिगच्छामः । किन्तु तस्योपलब्धिःकथं जायते जगतीतले वार्तामिमां कतिपथा एवावगच्छन्ति । केचित्कथयन्ति यद्धनेनानन्दो लभ्यते, केचित्कथयन्ति यद्विद्ययैव महानानन्दो लभ्यते किन्त्वेषु सर्वेषु पक्षेषु स्थितेषु न कश्चिदपि पक्षो नराणामाशोदरदरीं पूरयितुं क्षमोऽस्ति । अतः सकल-सारासारसमन्वितेऽस्मिन् संसारे एतादृक् क उपायोऽस्ति येन च सुखस्योपलब्धिर्भवेत् । अस्यां दशायाम् सर्वेषां प्राणिनां पुरस्तात् व्यायाम एव समागच्छति येनैहिक–पारलौकिक सकल-सौख्यसमुदायानामुपलब्धिर्भवति । धर्मसाधनं च उक्तं यथा—

शरीरमाद्यं खलु धर्मसाधनम् ।

निश्चयेनैवाद्यं धर्मसाधनं शरीरमेवेति । यदि शरीरं स्वस्थं नास्ति तदा पुनः चित्तमपि स्वस्थं भवितुं नार्हति । मनसः अस्वास्थ्येन विचारास्वस्थता तथा च धर्मसाधना क्व । अतः शरीररक्षा प्राणिनां परमं कर्तव्यम् ।

शरीररक्षा तदैव भवितुमर्हति यदा च शरीरस्य सर्वे भागाः परिश्रमेण व्यवह्रियेरन् । परिश्रम एव व्यायामः कथ्यते । सच द्विधा एकः शारीरिकोऽपरो मानसिकस्तत्र प्रथमो धावनादिक्रियाभिरपरः प्राणायामादिभिः । प्राणिनां शरीराणां सर्वा सुदशा व्यायामोपरिनिर्भरो शरीरस्वस्थतां बिना सांसारिको भोग-पदार्थां व्यर्था इव प्रतिभान्ति । व्यायामेन शरीरं नीरोगं दृढं च भवति । येन ना सांसारिक-कार्याणि सरलतया कर्तुं शक्नोति दीर्घायुश्च भवति ।

अधिक-व्यायामकरणेन तु निःश्वासपवनोऽतिरंहसा चलति येनाक्षयादि-रोगाणां संभावना भवति । व्यायामस्याकरणेन शरीरे आलस्यं अङ्गानामदृढ़त्वं ततश्च शिरोवेदनादिरोगाणां सम्भावना भवति । अतो नात्यधिको नातिस्वल्पो व्यायामः कर्तव्यः । विद्यार्थिनां कृते तु धावनभ्रमणासनादिकमेव पर्याप्तम्

यतस्तेषां पठने हानिर्भविष्यतीति मेऽनुभवः । विशेषतः हलासनमेव लाभप्रदायकम् । व्यायामेन सहैव संयमनियमाहारविहारा अत्यावश्यकाः । आयुर्वेदे भोजनाहारविहार-संयमादिप्रकारः श्रेष्ठप्रकारेण वर्णितोऽस्ति । अत सर्वेषां व्यायामेन सहैव भोजनाहारविहारसंयमादीनां परमावश्यकता प्रतिभाति । कलाशालासु अध्येतारो विद्यार्थिनः अनेन प्रबन्धेन स्वकार्यं निश्चितं करिष्यन्ति इति मे आशास्ति । विद्यार्थिन एव भविष्यत्कालस्याशास्वरूपाः सन्ति ।

---

# विरोहिणो भावः ।

( ले०—पाण्डेय, श्रीकुसुमाकरः साहित्याचार्य्यः—पटना )

"अशान्ता भ्रान्ता क्व प्रणय-तम-दान्ता वनमिता ?<br>
अथाहो सा सिन्धुं कुपितजनबन्धुं त्वनुसृता ?<br>
उताहो तत्प्राणाः जितकुसुमबाणाः द्रुतरयाः—<br>
विदेशं यातास्ते रमणहृदयेशं वितरितुम् ? ॥१॥

"सखे ! हे रोलम्ब ! स्मरकृतविदेहे मयि दयां<br>
प्रयान्ती सा रुष्टा क्वचिदपि नु दृष्टा प्रियतमा ?<br>
"मया सार्द्धं कान्ता प्रिय ! विरहशान्ता न मिलिता"<br>
"मृतेत्येवं" भूयो हतरतिरयो हा ! निपतति ॥ ॥२॥

कदाचित्कान्तारे क्वचिदपि च पाषाणशयनं—<br>
कदाचिद् नो वासः कचिदपि हताशः" क्व सुमुखि !"<br>
कदाचिद् नो गेहं क्वचिदपि च मोहं प्रलभते<br>
विलोक्यैवं भृङ्गो मधुमदनसङ्गो विवदते ॥"३॥

कथं शौण्ड ! प्राज्ये सुख-सुकृत-राज्ये लुठसि कौ ?<br>
स्थितेयं सा जाया प्रमदसहजा या तव पुरः<br>
इति श्रुत्वा मत्तो विरहमद-युक्तो ह्युपविशन्—<br>
न तां दृष्ट्वा ब्रूते—"निज सुकृतलुप्ते क्व रमणी" ? ॥४॥

नभो दृष्ट्वा कान्तः भुवनविमुखान्तः प्रलपति—<br>
क्षमां याचे कान्ते भ्रमति नयनान्ते कथमिह ?<br>
अधो दृष्ट्वा, कर्णाभरण ! कुसुम ! श्रावयसि किम् ?<br>
असारे संसारेऽनुभवति स कष्टं तव निभः !! '"॥५॥

---

# प्रश्नोत्तरणम् ।

उत्तरकर्ता—केदारनाथ त्रिपाठी ( गोलास्थः ) क्वीन्सकालेज काशी ।

गीर्वाणगवीसमनुशीलनपावनशेमुषीका माननीया महानुभावाः ! विगताङ्के कस्मिंश्चित् सूर्योदयस्य प्रश्नद्वयं व्याकृतिस्थलीं समवलम्ब्य मुद्रितमासीत् ।

## तत्र प्रथमस्योत्तरम् ।

( अवश्य ) इत्यस्य स्वार्थिककप्रत्यये "कोपधादण्" ४।२।१३२। इत्यणि वृद्धौ-आवश्यकम् । स्त्रीत्वविवक्षायां "टिड्ढाणञ्" ४।१।१५। इत्यादिना ङीपि आवश्यकी । अत एव दर्पणे भूषणसारे शब्दरत्नादिग्रन्थे च बहुषु स्थलेषु लभ्यतेऽयं प्रयोगः । इति ।

यद्यपि "तुमर्थेसेसेनसे" ३।४।६। इत्यादिना कध्यैकध्यैनो विधानेऽपि पृणध्यै-आहुवध्यै-इत्येतयोः सिद्धिः । पृणध्यै-इत्यत्र गुणाभावार्थं छान्दसत्वादिति कल्पनाऽपि नेति महल्लाघवम् ।

तथापि-अध्यै-अध्यैनोरभावे गमध्यै-इत्यादि प्रयोगे कध्यै कध्यैनो विधाने "गम हन जन" ६।४।९८। इत्यादिनाऽनुनासिकलोपः प्रसज्ज्येत इति विशेष इति संविभायन्तु सुधियः । इतिदिक्

---

# समस्या—"लतिका"

—:०:—

रचयिता—लक्ष्मीनारायणद्विवेदी ( रामकविः ) साहित्य शास्त्री ।

मयूरैरानृत्तं, मधुरमनुनीतं कलरवै

निशो गीतैर्नीताः सरसविनयैश्चातकवरैः ।

प्रसन्नां यां कर्तुं क्षणमपि न शक्ताः समभवन्,

प्रफुल्लांगी साहो पिकनवरुतैश्चूतलतिका ॥ १ ॥

रचयिता—महादेव प्रसाद अग्निहोत्री, साहित्यशास्त्री ।

दिगन्ते संभूते 'भ्रमर कुल झङ्कारकलिते,

पलाशानां सद्यः कुसुमनिकरैरागभरिते ।

रसालेनाक्रान्ता मदनशरविद्धेन सहसा,

वसन्तं पश्यन्ती नवकुसुमिता बाललतिका ॥

रचयिता—बालकराम विद्यार्थी ।

सुधा-मयूख-चन्दिरे, शिवाविलासमन्दिरे,
विभूति-लेपसुन्दरे, भुजंगसंगिकन्धरे ।
दृगग्निपीतमुर्मुरे, महाविमोह-मुद्गरे,
विमुक्तिकेलिमन्दरे, हरे विधेहि पूजनम् ॥

——

## वार्षिको वाद-विवाद-समारोहः ।

पौषशुक्लाष्टम्यां ( ता० २०।१।३७ बुधवासरे श्रीस्याद्वादमहाविद्यालयस्य सुसज्जविशालसभाभवनं स्याद्वादप्रचारिणीसमितेर्वार्षिकं संस्कृतवादविवादाधिवेशनं महता समारोहेणाभवत् ।

अधिवेशने प्रथितविदुषां संस्कृतच्छात्राणाञ्चोपस्थितिः सन्तोषप्रदा समजनि । वादविवादाधिवेशने श्रीमन्तः पं० बालबोधमिश्रा व्याकरणाचार्याः, ( अध्यापक ग० सं० का० बनारस ), पं० सभापति शर्मोपाध्याया व्याकरणाचार्याः (व्यवस्थापकाः, वि० पा०) पं० महादेव शास्त्रिणो व्याकरण साहित्याचार्याः अध्यापक ( हि० वि० वि० ) निर्णेतृपदमलंचक्रुः ।

काशीस्थ हिन्दूविश्वविद्यालयादिभ्यः सप्तभ्यो विद्यामन्दिरेभ्य—श्चतुर्दश वादचतुराः छात्रा अधिवेशने समागतवन्तः । विवादविषयः "परमात्मनि जगन्नियन्तृत्वं विद्यते न वेति" नियुक्तः । अस्तिपक्षे ( ईश्वरकर्तृत्वपक्षे ) सर्वोत्तमः श्रीशिवभूषणशर्मा हि० वि० विद्यालयच्छात्रो जातः, नास्तिपक्षे ( ईश्वराकर्तृत्वपक्षे ) श्रीताराचन्द्रो जैनः श्रीस्याद्वादमहाविद्यालयच्छात्रो बभूव । ताभ्यां व्याख्यानचतुराभ्यामुत्तमपारितोषिके रजतपदके वितीर्णे ।

लब्धसर्वाधिकाङ्कान्तेवासिद्वयत्वेन-श्रीस्याद्वादमहाविद्यालयाय विजयचिह्नं प्रदत्तम् । अवसाने श्री पं० सभापतिमहोदया गीर्वाणवाणीगौरवविषये व्याख्याञ्चक्रुः, श्री पं० महादेवशास्त्रिमहोदयैश्चेश्वरकर्तृत्वानभ्युपगमे हानिः प्रदर्शिता, जगन्नियन्तृत्वपक्षश्च संसाधितः । अन्तिममंगलगानपुरःसरं समारोहः सम्पन्न इतिशम् ।

## शोकोद्गारः ।

( ले०—श्रीशशिभूषण झा छात्रः, सी० सं० वि० वाराहीस्थः )

सदाऽऽनन्दं विन्दन्निह हि जनवृन्दं ननु मुदा
अनो योऽगोप्लोऽस्स क्व नु वत ! ! गतोऽस्मान् परिजहत् ॥

किमीशोऽनीशः सन् स्मरणपथमेतं समनयत्
द्रुतं दुःखं हन्तुं दिवमित इतोऽसौ बुधवरः ॥ १ ॥
सदानन्दो जीनो दिवि वत ! ! "सदानन्द" इतरः
क्षितौ राजन्नास्ते कृतकर इतीशः किमधुना ॥
विन्नृएवन्न श्रान्तं १ पदकमिह हैमं स्पृहयते
प्रदातुं स्वोरस्थं सुभगमणिहारं समहरत् ॥ २ ॥
किम् क्ष्मा क्षीणा क्षितिपतिरभूत् क्षीणशक्तिः द्विपेशः
क्षीणांशु र्वासरमणिरपि क्षीणतां क्षिप्रमाप ॥
इत्यालोच्य क्षणमपि न संस्थातुमीष्टेस्म भूम्याम्
वन्धून् स्वीयान् परिजहदरं व्योमयातं समैषीत् ॥ ३ ॥
"मिलिन्दपद, विक्षणप्रयुतकाश्यपी" सत्यगी-
र्युतद्धि विधु ( १९३६ ई० ) वत्सरे सहसि मासि पक्षेऽसिते ।
विहाय निज वान्धवं सममरं परेषां कृति
श्चिकीर्षु रयमत्यजन् निजकलेवरं सुन्दरम् ॥ ४ ॥

---

# रामाष्टकम् ।

ले०—श्रीलक्ष्मीकान्तझा "विद्यार्थी"
जानकी सं० वि० नरकटियागंज ( चम्पारन )

अमन्दमुद्वृन्दयुतं दशाननं तिरस्कृतेन्द्राऽखिलमोदसम्पदम् ।
जघान जन्ये हतसैन्यसञ्चये करोतु रामः शिवमत्र सत्वरम् ॥१॥
वामे यदीयेऽवनिजा विराजते यस्याऽनुजो भक्तिनतो मुदा सदा ।
अग्रे पदं यस्य मरुत्सुतः स्मृतो रामः स वः शं वितनोतु सत्वरम् ॥२॥
स्मृत्वा यदीयं चरणाम्बुजं शुभं सौख्यं लभेरन् पतिता जना अपि ।
अन्ते परं स्थानमितः प्रयान्ति ते रामः स वः शं वितनोतु सत्वरम् ॥३॥
निजस्य तातस्य वचो निभालयन्, वनावनीस्थर्षिकुलानि पालयन् ।
कृताटवीवास-सुहिंस्रजन्तुतो —रामः स वः शं वितनोतु सत्वरम् ॥४॥
श्रीरामचन्द्रः प्रमुदाटवीमटन् क्रव्यादवारान् भुजवीर्यसंयुतान् ।
संख्ये ह्यसंख्ये निजघान नन्दयन्—श्री मैथिलीं शं वितनोतु सत्वरम् ॥५॥

---

१ असौ सदानन्दः षड्त्रिंशदधिकैकोनविंशतिशताब्द्याः—ज्यौतिषाचार्य च० खण्डे प्रथम श्रेण्यामुदतरत्तत्रास्य स्वर्णपदको भाव्यासीदिति ।

विधुं हसँश्चारुतरैर्निजस्मितैः स्मरं जयन्नुत्तमकायकान्तिभिः ।
परास्तगीर्वाणगुरुः स्वया गिरा करोतु रामः शिवमत्र सत्वरम् ॥६॥
यस्याभिनव्याम्बुजकोमलं पदं संसारमुक्तान् कुरुते जनानपि ।
पापातिलीनान् पतितान् पुनाति वै रामः स वः शं वितनोतु सत्वरम् ॥७॥
यन्नुद्यमानो मिहिरो जगत्तमःस्तोमान् विनिघ्नन् समुदेति प्रत्यहम् ।
दोषाकरोऽपीह ददाति शीततां भव्यं प्रभुर्नो वितनोतु "सत्वरम्" ॥८॥

---

# समालोचनम् ।

## त्रिदोषवादः ।

त्रिवाडयुपनामकेन भानुशङ्करशर्मणा संगृहीतः ।।ग्रन्थेऽस्मिन् वातपित्तश्लेष्मणां संयोगेनैव शरीरक्रिया निरुह्यते । यथा हि वायुसूर्यचन्द्रमसां प्रभावेण ब्रह्माण्डव्यवहरो भवतीत्यादि निदर्शयता ग्रन्थकृता दोषत्रयाणां वैज्ञानिकत्वं संसाधितम् । इमे हि शरीरधारकतया धावतः, रोगोत्पादकतया शरीरदूषणात् दोषाः, प्रत्यहं शरीरमलिनीकरणाद् मला उच्यन्ते, इति प्रत्यक्षानुमानगमैं यथावद् दर्शितम् । अस्मिन् ग्रन्थे प्रत्यक्षानुमानशब्दखण्डनाम्ना प्रकरणत्रयं विद्यते । तत्र प्रथमप्रकरणे ।दोषधातुमलारब्धं शरीरमिति प्रतिज्ञाय तत्साधने दोषधातुमलानां लक्षणञ्च विहितम् ।

शरीरदूषणाद्दोषा धातवो देहधारणात्
वातपित्तकफा ज्ञेया मलिनीकरणान्मलाः
विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा
धारयन्ति जगद्देहं कफपित्तानिलास्तथा । इत्यादिना

द्वितीये अनुमानखण्डे च चरकादिपद्धत्याऽनुमाननिरूपणम् । दोषविषयकाद्यनुमानवीजवर्णनमित्याद्यो विषयाः सन्ति ।

तृतीये शब्दखण्डे तु आप्तादिलक्षणानन्तरम् आयुर्वेदस्य पुण्यतमत्वादि वर्णनं कृत्वा अथर्ववेदादितोऽपि दोषाणां रोगजनकत्वं संसाधितम् । पुस्तकमिदं वैद्य श्रीयादवजी त्रिकमजी आयुर्वेदाचार्य्येभ्य मुम्बापुरीस्थेभ्यः समर्पितं विद्यते । ग्रन्थकर्त्रा त्रिदोषाणां व्याधिनिदानत्वसिद्धौ बहु प्रयतितम् विद्यते यद्यपि विषयान्तरणामपि नात्यावश्यककानां ,सन्निवेशः कृतो दृश्यते । परन्तु सामान्यतो दोषत्रयविषकविचार एव प्राधान्यमाश्रयति । मुद्रण-संशोधन-प्रकाशनदोषसद्भावेऽपि आयुर्वेदरहस्यजिज्ञासुभिस्तच्छात्रै ग्रन्थोऽयं संग्राह्य एव प्रतिभाति॥। मूल्यम् सार्धं रूप्यकम् । पं० हरिहर भानुशङ्कर त्रिवाड़ी, ठि० वरतेजदरवाजा भावनगर ( काठियावाड ) इति सङ्केतेनोपपलभ्यते ।

समालोचकः—
श्री गोपालशास्त्री
[ महामहाध्यापकः साहित्याचार्य्यः, दर्शनकेशरी न्यायतीर्थः । ]

दण्डात्मनोस्तु संयोगः सर्वथा हि विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥
संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्वा परं ब्रह्माधिगच्छति ॥
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥
ये च सन्तानजा दोषा ये दोषा देहसंभवाः ।
प्रैषाग्निर्निर्दहेत्सर्वांस्तुषाग्निरिव काञ्चनम् ॥
कपालं वृक्षमूलानि कुचैलमसहायता ।
उपेक्षा सर्वभूतानामेतावद्‌ भिक्षुलक्षणम् ॥
यस्मिन् वाचः प्रविशन्ति वाप्यां त्रस्ता द्विपा इव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥
नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् ।
ब्राह्मणानां विशेषेण नैव ब्रूयात्कथञ्चन ॥
यद्‌ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।
तूष्णीमासीत निन्दायां कुर्वन् भैषज्यमात्मनः ॥
वसतिः सोऽमृतो नित्यं यो हिंसां न प्रपद्यते ।
अहिंसकः समः सत्यो धृतिमान् नियतेन्द्रियः ॥
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ।
एवं प्रज्ञानतृप्तस्य निर्भयस्य निरामिषः ॥
न मृत्योरतिगो भावः स मृत्युमधिगच्छति ॥
प्रतिष्ठा सूकरी-विष्ठा-समा गीता महर्षिभिः ।
तस्मादेनां परित्यज्य कीटवत् पर्यटेद्‌ यतिः ॥

इति हंसदीक्षापद्धतिः समाप्ता ।

---

## ४८—परमहंसदशा ।

परमहंसदशाप्राप्तये पद्धतेर्नाऽऽवश्यकत्वं यतो हि हंसव्रतपालनतत्परस्य सन्न्यासिनः सा दशा स्वभावतो जायते, तस्यां दशायां विधिनिषेधासत्त्वाच्च । जीवन्मुक्तस्य सन्न्यासिनः कृतेऽवस्थाविशेषत्वं परमहंसदशात्वम् । जीवन्मुक्ति-परमहंसदशाशब्दौ पर्य्याय-वाचकौ । तुरीयावस्थायां यदा दशेयं जायते तदा

तस्याः कृते साधनस्यानापेक्षा । इमामवस्थामुद्दिश्य शास्त्रेषु यानि वचनान्युपलभ्यन्ते तानि संक्षेपतोऽधो निर्दिश्यन्ते ।

व्रतग्रहणविषये याज्ञवल्क्यः—

"परः परमहंसोऽसौ वर्तेताद्वैतभावनः ।
आत्मतत्त्वं स्वयं स्मृत्वा गृह्णीयात्परमं व्रतम् ॥
पूज्यः परमहंसः स संन्यासी विगतज्वरः ।
कुर्वन्नकुर्वन् वा किञ्चिदसौ नारायणः स्मृतः ॥"
"पुण्यः परमहंसोऽसौ ब्रह्मोपास्तौ स्वतः क्षमः ।"

दण्डाधिकारविषये—

"न विधिर्न निषेधोऽस्य चतुर्थोऽनियमो ह्ययम् ।
देवपूजाधिकारी नाप्यात्मारामो मतः स्वयम् ॥
योगादिसिद्ध्या किं तस्य राजयोगे व्यवस्थितिः ।
पूज्यः परमहंसोऽयं विबुधेश्वरतां गतः ।
सर्वदाऽनुभवं ह्यन्तः प्रणवस्य करोत्यलम् ।"
"सर्वथा पूजनीयोऽयं मार्गं विधिनिषेधयोः ।
अतीतः परमो हंसः प्राप्नोति ब्रह्मरूपताम् ।"

दीक्षाप्रदानविषये—

"न विधिर्न निषेधश्च चतुर्थस्य कदाचन ।"

प्राणान्ते देहस्य दाहादिविषये—

"चतुर्थस्य विशेषो न नियमोऽस्त्यत्र कश्चन ।"

ऐश्वर्य्यत्यागविषये—

"संन्यासी परमो हंसः सर्वेषां भक्तिभाजनम् ।
ब्रह्मस्वरूपस्तत्तस्य क्व निषेधः क्व वा विधिः ।
भेदः परमहंसस्य ब्रह्मणा सह कोऽपि नो ।"
"अहमेवास्मि ब्रह्मेति भावस्यानुभवं विना ॥
कश्चित्परमहंसस्य पदवीं लभते नहि ।
द्वैतभावदशायान्तु कदाचिन्नैव जायते ।
सच्चिदानन्दरूपा याऽप्यद्वैतस्थितिरुत्तमा ।
अस्यामेव दशायां सा त्वन्तिमायां प्रवर्तते ।
तदानीं जायते चात्मारामः संन्यासिसत्तमः ।"

'आत्मारामस्य भेदोऽपि द्विविधः परिकीर्तितः ।
प्रारब्धकर्मणस्तस्य भेदतो न स्वतो हि सः ।
परहंसस्य प्रारब्धकर्मवैचित्र्यदर्शनात् ।
ईशकोटिर्ब्रह्मकोटिरिति द्वे नामनी श्रुते ।
ब्रह्मकोटेः परो हंसो मूकस्तब्धोजड़स्तथा ।
उन्मत्तो बालचेष्टश्च न जगत्तेन लाभवान् ।
ईशकोटेः परो हंसः परां काष्ठां गतोऽनिशम् ।
निष्कामस्य व्रतस्यात्र जगज्जन्मादिशक्तिमान् ।
जगदीशप्रतिनिधिर्भूत्वा तत्कर्मसंरतः ।
जगद्धिताय विप्रर्षे ! एनं विद्धीशरूपिणम् ।
परहंसस्त्वीशकोटेर्ब्रह्मरूपधरोऽपि सन् ।
देवर्षिशक्तियुक्तश्च भवतीति विनिश्चयः ।"
"ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ।
अयाचितं यथा लाभं भोजनाच्छादनं भवेत् ।
परेच्छया च दिग्वासाः स्नानं कुर्यात्परेच्छया ।
स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ।
यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ।
निष्क्रम्य वनमास्थाय ज्ञानयज्ञो गतस्पृहः ।
कालाऽऽकांक्षी चरन्नेव ब्रह्मभूयाय कल्पते ।
निर्मानश्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृतं भाषते गिरा ।
पुण्यायतनचारी च भूतानामविहिंसकः ।
काले प्राप्ते चरन् भैक्षं ब्रह्म भूयाय कल्पते ।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥
यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ॥
अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ।
न कुर्यान्न वदेत्किञ्चिन्न ध्यायेत्साध्वसाधु वा ।

आत्मारामोऽनया वृत्त्या विचरेज्जड़वन्मुनिः ।
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरतिरात्मवान् समदर्शनः ।
बुधो बालकवत्क्रीडेत् कुशलो जड़वच्चरेत् ।
वदेदुन्मत्तवद् विद्वान् गोचर्यान्नैगमश्चरेत् ।
क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽपि वा ।
ताड़ितः सन्निरुद्धो वा वृत्त्या वा परिहापितः ।
वीष्ठितो मूत्रितो वा ऽज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरेत् ॥
सम्माननं परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिश्च विन्दति ।
तथा चरेद्वै योगी स सतां धर्ममदूषयन् ।
जना यथावमन्येरन् गच्छेयुर्नैव सङ्गतिम् ।
जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ।
सर्वत्र विचरन्मौनी वायुवद्वीतकल्मषः ।
समदुःखसुखः दान्तो हस्तप्राप्तञ्च भक्षयेत् ।
इयं परमहंसस्य गतिः श्रेष्ठा निगद्यते ।
इति परमहंसदशावर्णनम् ।

## ४९ द्विजेतरेषां प्रव्रज्याविधानम् ।

त्रिलोकस्य पावयित्री संवर्द्धयित्री चेयमविनाशिनी वर्णाश्रममर्यादा नाशवन्तमपि मृत्युलोकमधिवसन्तीमुन्नतिशीलां मानवजातिं संरक्षितुं परमं साधनमित्यत्र नास्ति सन्देहलेशोऽपि । वर्णेषु ब्राह्मण आश्रमेषु संन्यासः श्रेष्ठौ स्तः । अत एव संन्यासाश्रमस्य महत्त्वं सर्वतो गरीय इति शास्त्राणि समामनन्ति । संन्यासी नूनमात्मानं वर्णाश्रमधर्मरक्षकं जानीयात् । तदाचरणेनैवेदं स्फुटीभवेद् यदसौ दैवान्यपि जगन्ति संवर्द्धयितुमुत्तरदायीति । देहाध्यासशून्यायां परमहंसदशायां यदास्तां, किन्तु तद्व्यतिरिक्तावस्थान्तरेषु वर्णाश्रमधर्मरक्षार्थं सदा सावधानेन संन्यासिना भवितव्यम् । करालकलिकालप्रभावातिरेकेण कल्मषदूषिते मानवसमाजे चत्वारोऽपि वर्णाः परित्यक्तस्वधर्माण इति तद्बीजरक्षणमपि न सुशकमित्यवधेयम् । प्रबले कलिकाले

ब्राह्मणाः शूद्राश्चावशिष्यन्ते । घोररूपे कलौ तु तद्बीजरक्षाऽपि कथं कथमपि सम्भविष्यति । आश्रमविषयेऽप्येवमेवावधेयम् । कलिकालप्राबल्येन गृहस्थाश्रमः संन्यासाश्रमश्चेति द्वावाश्रमावचशिष्टौ स्यातां, घोरस्वरूपतामापन्ने कलौ तु तद्बीजरक्षणं चापि सुमहत् कठिनं सम्पत्स्यते । अत एवाऽऽपद्धर्ममनुसृत्य तन्त्रशास्त्राणि कलिकालधर्मप्रकरणे पञ्चमस्यापि वर्णस्य द्वयोश्चाश्रमयोः स्थितिं समर्थयन्ति, निःश्रेयससाधनार्थं पञ्चानामपि वर्णानां संन्यासाश्रमाधिकारं चापि निर्दिशन्ति । व्यवस्थेयमापद्धर्ममूलिका । वर्णाश्रमधर्ममर्यादापरिरक्षणाय ब्राह्मणाः ब्राह्मणेतरे च संन्यासिनो नैजानि पृथक् पृथक् चिन्हानि गृह्णन्तः स्वानि कर्माणि च विदधानाः सावधानाः परं पदं लभन्त इति । यद्यपि तन्त्रेषु सुस्पष्टशब्दं दरीदृश्यते, तथापि सर्वेऽपि पाञ्चवर्णिका मनुतनुजनुषो वर्णाश्रममर्यादारक्षायै ब्राह्मणवर्णसाधुभिरेव दीक्ष्येरन् इत्यपि तत्र निस्सन्देहमुक्तम् । ब्राह्मणद्वारा निर्वर्त्तिता किल कर्मकाण्डपद्धतिः सिद्धिकरी श्रेयःसाधिका हिताधायिका च समाम्नायते । तथा हि..............................तन्त्रे—

चत्वारः कथिता वर्णा आश्रमा अपि सुव्रते ! ।
आचारश्चापि वर्णानामाश्रमाणां पृथक् पृथक् ॥
कृतादौ, कलिकाले तु वर्णाः पञ्च प्रकीर्त्तिताः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च ॥
एतेषां सर्ववर्णानामाश्रमौ द्वौ महेश्वरि ।
तपःस्वाध्यायहीनानां नृणामल्पायुषामपि ॥
क्लेशप्रयासाशक्तानां कुतो देहपरिश्रमः ।
ब्रह्मचर्याश्रमो नास्ति वानप्रस्थोऽपि न प्रिये ॥
गार्हस्थ्यो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे ।
विप्राणामितरेषाञ्च वर्णानां प्रबले कलौ ॥
उभयत्राश्रमे देवि ! सर्वेषामधिकारिता ।
विप्राणामितरेषां च कर्मलिङ्गं पृथक् पृथक् ॥
अवधूताश्रमो देवि ! कलौ संन्यास उच्यते ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रः सामान्य एव च ॥
कलावधूतसंस्कारे पञ्चानामधिकारिता ॥
इत्यादि ।

कर्मोपासना ज्ञानं चेति काण्डत्रयविभक्तो भगवानपौरुषेयो वेदः । कलिकालप्रभावविजृम्भणेन वदिककाण्डत्रयसाधनेऽल्पशक्तयो मनुष्या न समर्था

इति हेतोर्वैदिककर्मकाण्डस्थाने तान्त्रिकस्य कर्मकाण्डस्याविर्भावः समजनि। अत एव सम्प्रति सर्वत्रैव कर्मकलापे तान्त्रिकप्रयोगप्राचुर्य्यं परिलक्ष्यते। अद्वैतं स्वस्वरूपमुपलब्धुमसमर्थानां पुरुषाणां कृत एव कलिकाले बहुविधानां दार्शनिकद्वैतसिद्धान्तानां प्रचारोऽभूद् भविष्यति च भविष्यति। उपासनायामपि सगुणनिर्गुणयोर्भेदराहित्येऽपि स्वतन्त्रस्याधिकारद्वयस्य सत्तां निर्दिशन्ति पुराणशास्त्राणि। तथाहि—

स च स्वेच्छामयो देवः साकारश्च निराकृतिः।
तेजो रूपं निराकारं ध्यायन्ते योगिनः सदा॥
वदन्ति च परं ब्रह्म परमानन्दमीश्वरम्।
अदृश्यं सर्वद्रष्टारं सर्वज्ञं सर्वकारणम्॥
सर्वदं सर्वरूपं तं वैष्णवास्तन्न मन्वते।
वदन्ति चैव ते कस्य तेजस्तेजस्विना विना॥
तेजो मण्डलमध्यस्थं ब्रह्मतेजस्विनं परम्।
स्वेच्छामयं सर्वरूपं सर्वकारणकारणम्॥
अतीवसुन्दरं रूपं विभ्रतं सुमनोहरम्।
किशोरवयसं शान्तं सर्वकान्तं परात्परम्॥
× × × ×
ध्यायन्ते वैष्णवाः शश्वद्देवदेवं सनातनम्।
जन्ममृत्युजराव्याधिशोकभीतिहरं परम्॥

[ देवी भागवते, स्कं० ६ श्लो० १२-२३ ]

अद्यत्वे अद्वैत-द्वैत-स्वरूप-निर्गुण-सगुणाधिकारकारणत्वेन चतुर्थाश्रमसेविसाधुसंन्यासिष्वपि भेदः प्रतीयते। एकस्माद्द्वयोरुत्पत्तिश्चेत्तर्हि द्वाभ्यामनेकेषामपि सम्भविष्यति। वैष्णवसम्प्रदायदार्शनिकरहस्यैकमात्रप्रकाशके श्रीदेवीभागवते रहस्यमिदं भगवता श्रीवेदव्यासेन सुस्पष्टं साधु प्रकटीकृतम्। रहस्यं तद् द्वैतवादिनां सर्वेषामेव सम्प्रदायानां कृते दुर्लभममृतस्वरूपमवगन्तव्यम्। श्रीभगवद्भक्तकृपया देवीभागवतसम्बन्धिन्या ज्ञानेश्वरीटीकया द्वैतवादिनः साधकाः सविशेषं ज्ञानमनुभविष्यन्तीति सुदृढो विश्वासः।

अद्वैतद्वैतयोर्निर्गुणसगुणयोश्च भेदकारणादेव मुक्तावपि विभेदः सम्पन्नः। अद्वैतनिर्गुणाधिकारिकृते निर्वाणमुक्तिः, द्वैतसगुणोपासककल्याणाय सामीप्यादिमुक्तिरिति। कलिकालप्रभावेण संन्यासाश्रमसेविष्वपि भेदसद्भावः स्वाभाविक एव। यतः कालो हि दुरतिक्रमः। अतः किल कलिकाले चतुर्थाश्रम-

सेविनां नाना श्रेणयो दृष्टिगोचरतामायान्ति । निर्वाणपदं वा सालोक्यादिमुक्ति र्वा तेषां लक्ष्यं यदस्तु, किन्तु ते सर्वं एवाऽऽध्यात्मिकोन्नतेरधिकारिणः । विषविषय वैराग्यान्वितास्ते लोकमिमं पवित्रयन्ति । वर्णाश्रममर्यादारक्षणपरायणतया ते समेषामपि समादरणीयाः । दैवानि जगन्ति लक्ष्यीकृत्य तेऽग्रेसरन्तीति प्रशंसनीयस्तेषां पन्थाः । परन्तु वैदिकसंन्यासाचाराणां पूर्णपरिपालनासामर्थ्यात् तेषां साधनपद्धतौ, शिक्षायां, दीक्षायां, सदाचारादिषु च भेदसद्भावः सम्भवति । तादृशसर्वसाधारणचतुर्थाश्रमसाधनपद्धतिनिर्देशोऽत्यावश्यक इति तत्क्रमः प्रदीयते ।

## ( दीक्षाविधिः )

मुक्तः संसारपाशेभ्यः परमानन्दनिर्वृतः ।
कुलावधूतं ब्रह्मज्ञं गत्वा सम्प्रार्थयेदिदम् ॥
गृहाश्रमे परब्रह्मन् ममैतद्विगतं वयः ।
प्रसादं कुरु मे नाथ ! संन्यासग्रहणं प्रति ॥
ततः शिष्यः कृतस्नानो यतात्मा विहिताह्निकः ।
ऋणत्रयविमुक्त्यर्थं देवर्षीनर्चयेत्पितॄन् ॥
देवा ब्रह्मा च विष्णुश्च रुद्रश्च स्वगणैःसह ।
ऋषयः सनकाद्याश्च देवब्रह्मर्षयस्तथा ॥
समर्च्य विधिवत्तेभ्यः पिण्डान् दद्यात् पृथक् पृथक् ।
समाप्य श्राद्धकर्माणि गुरुर्दक्षिणवर्त्मना ॥
मुमुक्षुश्चित्तशुद्ध्यर्थमिष्टमन्त्रं शतं जपेत् ।
उपासनानुसारेण वेद्यां मण्डलपूर्वकम् ॥
संस्थाप्य कलशं तत्र गुरुः पूजां समाचरेत् ।
विधाय पूजां ब्रह्मज्ञो वह्निस्थापनमाचरेत् ॥
प्रागुक्तसंस्कृते वह्नौ स्वकल्पोक्ताहुतीर्गुरुः ।
दत्वा शिष्यं समाहूयाहुतीस्तेनापि हावयेत् ॥
आदौ व्याहृतिभिर्हुत्वा प्राणहोमं प्रकल्पयेत् ।
तत्त्वहोमं ततः कुर्याद्देहात्माध्यासमुक्तये ॥
चतुर्विंशतितत्त्वानि कर्माणि दैहिकानि च ।
हुत्वाऽग्नौ निष्क्रियो देहं मृतवच्चिन्तयेत्ततः ॥

इत्यादि

वैदिकसंन्यासव्यतिरिक्तकलियुगोपयोगिसर्वसाधारणसंन्यासदीक्षाविषये-निम्न-निर्दिष्ट सिद्धान्तानुसरण-पुरस्सर मधोलिखितरीत्या दीक्षाऽनुष्ठेया—

( क ) पद्धतिग्रन्थस्यैतस्य पूर्वभागे समुल्लिखित-वैराग्याधिकारवान् पुरुषो निष्कपटं पूर्वोक्तां रीतिमनुसृत्य स्वजनानुज्ञातः श्रीगुरुदेवचरणं शरणमुपेयात् ।

( ख ) गुरुगीतानिर्दिष्टशुभलक्षणसंयुक्तो गुरुर्मुमुक्षुणा शिष्येणान्वेषणीयः वर्णाश्रमश्रृङ्खलासंरक्षणार्थं ब्राह्मणवर्णोद्भवः, स्वस्माद्वा उच्चवर्णोत्पन्नः, समान-वर्णप्रादुर्भूतो वा गुरुर्वरणीयः । स च वयोवृद्धः स्यान्न वा, परन्तु ज्ञानवृद्धो नूनं भवेत् ।

( ग ) ग्रन्थेऽस्मिन् पूर्वभागे यथास्थानं शिष्यपरीक्षालक्षणं निर्दिष्टम् । तदनुसारेण शिष्यो गुरुणा परीक्षणीयः । देवभाषया वा स्वीयमातृभाषया वा पूर्वकथितरूपं गुरुचरणस्पर्शपूर्वकं शिष्यो गुरुं प्रार्थयेत् । प्रणिपातपादसेवन-जिज्ञासादिना गुरोः प्रसादः समुपलभ्यते । स एव दीक्षामूलं सफलता-निदानं च ।

( घ ) संन्यासव्रतग्रहणोपयोगिता सम्पादनाय संन्यासव्रतयोग्यता-धानाय वा समुचितं प्रायश्चित्तमनुष्ठातव्यम् । प्रायश्चित्त-विधानेऽपि वर्णाश्रममर्यादा नोल्लङ्घनीया । गायत्रीपुरश्चरणादिकं द्विजातिहिता धायकम्, राममन्त्रस्य, कृष्णमन्त्रस्य तारकब्रह्ममन्त्रस्य च जपः, गङ्गास्नानं, तीर्थदर्शनमित्यादि प्रायश्चित्तं द्विजेतरहितकरम् । अत्र कृपामयगुरुदेवदयैव सर्वतोऽतिरिच्यते ।

( ङ ) शुभे देशे काले च ऋणत्रयविमुक्तये मुमुक्षुणा श्राद्धमनुष्ठेयम् । तद्-विधिस्तु प्रथममेव प्रदर्शितः । श्राद्धेऽपि वर्णाश्रममर्यादा नूनं परिपालनीया ।

( च ) ततश्च गुरुदेवनिर्देशवशवर्तिना शिष्येण स्वसम्प्रदायमनुसृत्य स्वकीयस्वेष्ट-मन्त्रस्यैकलक्षजपात्मकं पुरश्चरणं समनुष्ठेयम् ।

( छ ) तदनन्तरं शुभमुहूर्त्ते पूर्वोल्लिखितरीत्या महासंकल्पो विधेयः ।

( ज ) वर्णाश्रममर्यादानुकूलं कलशस्थापनं, गणपतिपूजनं मातृकापूजनं च विधिवदनुष्ठाय ब्राह्मणमन्यं द्वारीकृत्य वा स्वयं वा अग्निं स्थापयेत् । ब्राह्मण वर्णोद्भवेन शिष्येण ब्राह्मणशरीरधारिणा गुरुणा वा अग्निः स्थापनीयः । अन्यथा-ऽत्र योग्यो भूदेवो नूनं द्वारीकर्त्तव्यः ।

(झ) यस्य सविस्तरवर्णनमुपरि विहितमास्ते, तत् होमकार्यमपि वर्णाश्रममर्यादापालनपूर्वकमेव विधेयम् । द्विजेतरवर्णभाजा शिष्येण पौराणिकेन तान्त्रिकेण वा मन्त्रेण स्वसाम्प्रदायिकेन इष्टमन्त्रेण वाऽऽहुतिर्देया ।

(ञ) ततश्च निम्नलिखितं संन्यासमन्त्रं गुरुरुपदिशेत् शिष्यस्तु पौनःपुन्येन तमुच्चारयेत्—

भूर्भुवस्स्वर्गलोकांश्च तेषामैश्वर्यमप्यहम् ।
परित्यजामि मुक्त्यर्थं सम्बन्धो नास्ति मे ततः ॥

(ट) ततोऽनु गुरोराज्ञया स्वसम्प्रदायानुरूपं संन्यासचिन्हं मुमुक्षुणा परिधेयम् ।

(ठ) तदनन्तरं श्रीगुरुदेवो निजकरकमलेन शिष्यहृदयं स्पृशन् आत्मतेजः शिष्ये सञ्चारयेत् । स्वसम्प्रदायानुरूपं शिष्यनामकरणं च कुर्यात् ।

(ड) यत्र सम्प्रदाये यादृशस्येष्टमन्त्रस्य जपः, यादृशस्येष्टरूपस्य ध्यानम्, यादृशसाधनपद्धतेः प्रचारश्च भवेत्, तादृशमेव सर्वं कृपालुर्गुरुदेवः शिष्यं तदाध्यात्मिकसमुन्नतये समुपदिशेत् । उपदेशोऽयं भगवद्भक्तिमार्गावलम्बी मन्त्रहठलयादियोगयुक्तः स्थूलज्योतिर्विन्दुध्यानसंवलितः स्वस्वसाम्प्रदायिकगीताग्रन्थ-निबन्ध-ग्रन्थानुसारी च भवितुमर्हेत् ।

इति द्विजेतरेषां प्रव्रज्याविधानम् ।

## ५०--संन्यासिनामन्त्येष्टिः ।

प्रेषोच्चारणेन मुमुक्षुर्नारायणरूपो भवति, तेन प्रेषमन्त्रस्य चरितार्थता प्राप्तिः कृता चेदस्मिन्मृत्युलोके तस्य महत्त्वं निःसीमं जातम् । यतः प्राणशून्यो देहोऽपि पवित्रो भवति । यतेर्मृतदेहवहने पदे पदे यज्ञानुष्ठानफलं वाहको लभते । कुटीचकव्रतधारिणो यतेर्मृतदेहोऽनले दाहयोग्यः । बहूदकव्रतधारिणो यतेर्मृतदेहोऽनले दाहयोग्यो नदीजले प्रवाहयोग्यो वा हंसव्रतधारिणो यतेर्मृतदेहो नदीजले प्रवाहयोग्यो भूगर्त्ते प्रवेशितुं योग्यो वा । परमहंसदशाप्राप्तस्य यतेर्मृतदेहस्य कृते न कोऽपि विधिः न कोऽपि वा निषेधः । विस्तृतोऽन्त्येष्टिविधिरधो लिख्यते स सर्व्वविधानां सन्न्यासिनां कृते व्यवहर्त्तव्यः । दाहपक्षे भूगर्त्तप्रवेशपक्षे चापि त एव मन्त्रा ये नदीजलप्रवाहपक्षे लिखिताः सन्ति ।

## ( ब्रह्मीभूतयतिदेहसंस्कारप्रयोगः )

देहपातानन्तरं गृहस्थपुत्रः गृहस्थशिष्यो वा ( यतिशिष्यस्यानधिकारित्वात् ) स्नात्वा आचम्य हस्ते कुशादिकं गृहीत्वा देशकालौ संकीर्त्य मम करिष्यमाणयतिसंस्कारेऽधिकारसिद्ध्यर्थं कृच्छ्रत्रयात्मकं प्रायश्चित्तं गोत्रयनिष्क्रयद्रव्यदानद्वाराहमाचरिष्यामि । गृहस्थपुत्रः कर्म्मकर्त्ता चेत् तत्पूर्वाङ्गत्वेन वपनं कारयिष्य इति सङ्कल्प्य कक्षोपस्थशिखावर्जं वपनं कारयित्वा स्नात्वाऽऽचम्य पुनः कुशादिकं गृहीत्वा इदं गोत्रयनिष्क्रयद्रव्यं रजतं चन्द्रदैवतं सद्यो यथाकालं वा ब्राह्मणाय ब्राह्मणेभ्यो वा दास्ये । पुनः कुशादिकं गृहीत्वा देशकालौ संकीर्त्य ब्रह्मत्वं गतस्य नारायणस्वरूपिणः अमुकस्य भिक्षोः वृहच्छौनकोक्तविधिना ( कर्म्मकर्त्तुः यो वेदस्त तद्वेदविधिना सर्वोऽपि यतिदेहसंस्कारः करणीयः । वृहच्छौनकोक्तविधिस्तु यजुर्वेदीयः ) संस्कारं करिष्य इति संकल्प्य अव्रणं नवं कलशमादाय तीर्थोदकादिनाऽऽपूर्य्य तदुदकम्—

गंगे च यमुने चैव गोदावरि सरस्वति ।<br>
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥<br>
नारायणपरं ब्रह्म तत्त्वं नारायणः परः ।<br>
नारायणपरो ध्याता ध्यानं नारायणः परः ॥<br>
यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।<br>
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥<br>
देवदत्ततया कश्चिद् ब्रह्मैव विकृतिं गतः ।<br>
पूर्णं ब्रह्मैव संप्राप्तस्तस्य ब्रह्म तदुच्यते ॥

इत्येतैर्मन्त्रैश्चाभिमन्त्र्य प्राणायामपुरःसरं "नमस्ते" इत्यादिभिः षोड़शमंत्रैः "सहस्रशीर्षा" इति पुरुषसूक्तेन "आपोहिष्ठा" इति तिसृभिश्च तदुदकेन यतिं स्नापयित्वा तच्छरीरम् "ॐ नमो नाराणाय" इति मन्त्रेण वस्त्रचन्दनाद्युपचारैरभ्यर्च्य शिक्यादौ शरीरमारोप्य मन्त्रघोषैर्जयशब्दादिभिः शंखघण्टाशब्दादिभिश्च ग्रामात्प्राचीमुदीचीं वा दिशं नीत्वा अश्वत्थमूलं नदीतीरादिरूपं वा समाश्रयेत् ।

तत्र भूमिखननपक्षे भूमिं व्याहृतिभिः संप्रोक्ष्य चतुर्हस्तप्रमाणां चतुरस्रमधोगतं देवयजननामकं खनित्वा तन्मध्ये सार्द्धहस्तपरिमितं लघुगर्तं कृत्वा "ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम्" इति व्याहृतिभिर्गर्तं पञ्चगव्येन प्रोक्ष्य ।

जलप्रवाहणपक्षे गर्तस्थाने महानदीं परिकल्प्य तत्र पूर्ववत् पञ्चगव्यं प्रक्षिप्य, प्रदक्षिणाग्रान् कुशानास्तीर्य गायत्र्याः शरीरं प्रोक्ष्य पुरुषसूक्तेन शंखोदकेन संस्नाप्य प्रणवेनाष्टोत्तरशतवारं संस्नाप्य ॐ नमो भगवते वासुदेवायेति मन्त्रेण षोड़शोपचारैरभ्यर्च्य तुलस्यादिमिलितपुष्पमालाभिरभ्यर्च्य "विष्णो हव्यं रक्ष" इति शरीरं गर्ते नद्यां वा निधाय—

"ॐ इदं विष्णुर्विचक्रमे त्रेधानिदधे पदम्। समूढ़मस्य पाँसुरे स्वाहा' इति दण्डं त्रेधा कृत्वा दक्षिणहस्ते निधाय ॐ हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जागोजा ऋतजा अद्रिजा ऋतं बृहत्॥ परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति। वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे॰॥ इति हृदये जपेत्। स्वशरीरं हस्तेनाभिमृशेत्।

ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः।
सबुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः॥

इतिमूर्ध्नि जपेत्।

ॐ विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा इति नाभौ जपेत्।

ॐ देवस्य त्वा सवितु॰ इति कर्णयोर्जपेत्। मूर्धानं "भूर्भुवः स्वः" इत्_ कृत्वा शंखेन नारिकेलेन वा भेदयेत्।

ॐ भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्॥ इति मन्त्रेण परश्वादिना भेदयेत्।

शिरोभेदनं कर्तुमशक्तश्चेत् शिरसि गुडपिण्डं नारिकेलादिफलं वा निधाय भिन्द्यादित्याचारः।

प्रणवेन देवयजनं दर्भैराच्छाद्य सिकतादिना पूरयेत्।

नद्यादौ चेच्छिरोभेदनानन्तरं पूर्वोक्तसप्तव्याहृतिभिरभिमन्त्र्य दर्भैराच्छाद्य "भूर्भुवः स्वरोम्" इत्यभिमन्त्र्य पाषाणैर्दृढं बद्ध्वाऽगाधजले भिक्षुदेहम् "ॐ स्वाहा" इति विमुञ्चेत्।

## ( ब्रह्मीभूतयतेः दशदिनकृत्यम् )

ततो "जन्मारभ्य-सम्भावित-पापैर्मुक्तावयमश्वमेधसहस्रफलं प्राप्ताः" इति भावयन्तो नमस्कृत्यागमनोत्सवादधिकोत्सवं कुर्वन्तो यत्रापस्तत्र गच्छेयुः।

उच्चैर्हरिस्मरणपूर्वकमवभृथवुद्ध्या सर्वे स्नात्वा वस्त्रादि धारयेयुः । कर्मकर्त्ता स्नात्वाऽऽचम्य हस्ते जलादिकं गृहीत्वा सिद्धिगतस्य ब्रह्मीभूतस्य नारायणस्वरूपिणः अमुकभिक्षोस्तृप्त्यर्थं तर्पणं करिष्य इति संकल्प्य सव्येन देवतीर्थेनैव 'आत्मानं तर्पयामि, अन्तरात्मानं तर्पयामि, परमात्मानं तर्पयामि" इति चतुर्वारं तर्पणं कुर्यात्—

ततः शुक्लपक्षे सिद्धिगतश्चेत् केशवं तर्पयामि नारायणं तर्पयामि माधवं० गोविन्दं० विष्णुं० मधुसूदनं० त्रिविक्रमं० वामनं० श्रीधरं० हृषीकेशं० पद्मनाभं० दामोदरं० इति ।

कृष्णपक्षे सिद्धिगतश्चेत् सङ्कर्षणं० वासुदेवं० प्रद्युम्नं० अनिरुद्धं० पुरुषोत्तमं० अधोक्षजं० नारसिंहं० अच्युतं० जनार्दनं० उपेन्द्रं० हरिं० श्रीकृष्णं० इति द्वादशनामभिस्तर्पयेत् । इदं तर्पणं क्षीरेणेति केचित् । ततस्तीरं प्राप्य धौतवस्त्रं परिधायाऽऽचम्य सिद्धिगतस्य ब्रह्मीभूतस्य नारायणस्वरूपिणः अमुकभिक्षोस्तृप्त्यर्थं नारायणपूजनं करिष्य इति संकल्प्य देवयजनोपरि (यत्रयतिदेहस्थिति स्तस्योपरि) जलप्रवाहणपक्षे-नदीतीरे चतुरस्रवेदिकां सम्पाद्य तत्र मृण्मयं लिङ्गं संस्थाप्य नदीजल एव वा तत्स्वरूपं विचिन्त्य पुरुषसूक्तेन "ॐ नमो नारायणाय" इत्यष्टाक्षरेण वा आवाहनाद्युपचारैः पूजयेत् । ततः पायसवलिं दत्वा घृतदीपं च समर्प्य पायसवलिं नद्यादौ क्षिपेत् । ततः शंखेन शुद्धजलमादाय तत्र गंधपुष्पतुलसीदलानि प्रक्षिप्य "ॐ ब्रह्मणे नमः इदमर्घ्यं समर्पयामि" इत्येवमष्टार्घ्याणि दद्यात् । एवं प्रकारेण सम्पूज्य सर्वे वाद्यादिघोषेणाऽत्युत्सवेन गृहं गच्छेयुः । इति प्रथमदिनकृत्यम् ।

यतेः सूतकं न भवति । कर्मकर्त्ता सम्यक्व्रताचरणं कुर्यात् । कर्मकर्त्ता एवमेव द्वितीयादिदशमदिनपर्यन्तं प्रत्यहं "आत्मानं तर्पयामि, अन्तरात्मानं तर्पयामि, परमात्मानं तर्पयामि" इति चतुर्वारं तर्पणं कुर्यात् । केशवादिद्वादशनामभिः सङ्कर्षणादिद्वादशनामभिर्वा तर्पणं पूर्वोक्तनारायणपूजनं पायसवलिदानं घृतदीपदानमर्घ्यदानं च कुर्यात् ।

द्वितीयादिदशमदिनपर्यन्ते देवयजनोपरि नदीतीरे वा नदीजले वा पूर्वोक्तकृत्यं करणीयम् । अशक्तौ सत्यां ब्रह्मीभूतयतेर्मठेऽपि एतत्कृत्यं भवितुमर्हति । मठाभावे कर्मकर्त्तुर्गृहेऽपि भवितुमर्हति ।

